॥ उमासहस्रम् ॥

%c01-q1/Nalini.Kalavacharla/uma_sahasram1-25|txt medskip
प्रथमं शतकम्

प्रथमः स्तबकः
व्योमशरीरा, स्त्रीरूपा च (आर्यावृत्तम्)

अखिलजगन्मातोमा तमसा तापेन चाकुलानस्मान् ।
अनुगृह्णात्वनुकम्पासुधार्द्रया हसितचन्द्रिकया ॥ १.१॥

निखिलेषु प्रवहन्तीं निरुपाधिविमर्शयोगदृश्योर्मिम् ।
अजरामजाममेयां कामपि वन्दे महाशक्तिम् ॥ १.२॥

सा तत्त्वतः समन्तात्सत्यस्य विभोस्तता तपश्शक्तिः ।
लीलामहिलावपुषा हैमवती तनुषु कुण्डलिनी ॥ १.३॥

परमः पुरुषो नाभिर्लोकानां सत्य उच्यते लोकः ।
परितस्ततः सरन्ती सूक्ष्मा शक्तिस्तपो लोकः ॥ १.४॥

अन्तर्गूढार्थानां पुरुषाग्नेर्धूमकल्प उद्गारः ।
शक्तिज्वालाः परितः प्रान्तेष्वभवज्जनो लोकः ॥ १.५॥

अतिसूक्ष्मधूमकल्पं लोकं ततमाख्यया़ऽन्यया नाकम् ।
एतं ततोऽपि सूक्ष्मा व्याप्ताऽन्तरतः परा शक्तिः ॥ १.६॥

धूमान्तरोष्मकल्पा शुद्धज्वालोपमा च या शक्तिः ।
तां दिवमाहुः केचन परमं व्योमापरे प्राहुः ॥ १.७॥

उद्गीर्णधूमकल्पो योऽयमपारो महाञ्जनो लोकः ।
व्योमान्तरिक्षगगनप्रभृतिभिरभिधाभिराहुस्तम् ॥ १.८॥

प्रान्तेषु कोऽपि शक्तेः पृथगात्मा वियदुपाधिसङ्गेन ।
परमात्मनो विभक्तः स्वयमभिमन्ता विनिष्पेदे ॥ १.९॥

दक्षः परोक्षमुदितः पन्था एष त्विषां जनो लोकः ।
तद्गर्भे लब्धात्मा कथिता दाक्षायणी शक्तिः ॥ १.१०॥

सत्याः प्रागपि शक्तेः प्रादुर्भावः स कीर्त्यते प्रथमः ।
ईशाभिमानमय्याः पृथगभिमानित्वनिष्पत्त्या ॥ १.११॥

आकाशस्य सुतैवं लक्षणया वस्तुतः प्रसूः शक्तिः ।
अदितेर्दक्षो दक्षाददितिरिति श्रुतिरबाधैवम् ॥ १.१२॥

जगतां मातापितरौ सतीभवौ केऽपि पण्डिताः प्राहुः ।
अदितिप्रजापती तावपरेषां भाषया विदुषाम् ॥ १.१३॥

दिव्यपुमाकृतिमीशे बिभ्रति लीलार्थमस्य रमणाय ।
दिव्यवनिताकृतिं सा बभार माता च भुवनानाम् ॥ १.१४॥

भासुरहेमाभरणां बहुशोभामीश्वरप्रमोदकलाम् ।
मूर्तिं पावनकीर्तिं तां हैमवतीमुमामाहुः ॥ १.१५॥

तस्य प्रथमः साक्षी भुवनजुषां नयनशालिनां मध्ये ।
वपुषः कीलादिसुदृशो निरुपमपुण्यो निलिम्पपतिः ॥ १.१६॥

पल्लवमृदु वेदिगतज्वलनपवित्रं महार्घमणिकान्तम् ।
नवचन्द्रखण्डसौम्यं शिवसुदृशस्तत्स्मरामि वपुः ॥ १.१७॥

केचन गौरीं देवीं शीताद्रेर्देवतात्मनो जाताम् ।
कथयन्ति स्त्रियमुत्तमलावण्यास्वादितो गण्याम् ॥ १.१८॥

सत्यैव भवतु सेयं कथा तथाऽपि प्रभाषितां भक्तैः ।
तां मूर्तिमादिसुदृशो जानीयात्कमपि तेजोंशम् ॥ १.१९॥

मन्यन्ते केऽपि घनं पर्वतमुक्तं निगूढया वाचा ।
प्रादुर्भवति गभीरध्वनिरविषह्या यतः शक्तिः ॥ १.२०॥

आकाशो गोलेभ्यो यद्वितरति निजरजश्चयादन्नम् ।
नेशाय कीर्त्यते सा संसारे दक्षयागकथा ॥ १.२१॥

व्याप्ताऽपि यन्निगूढा बहिरीक्षकबुद्ध्यपेक्षया नष्टा ।
शक्तिर्यागे तस्मिन्नवसानं तदुदितं सत्याः ॥ १.२२॥

पर्वतनाम्नो वैदिकभाषायां यदियमतिबला शक्तिः ।
घनतो भवति व्यक्ता तदभिहितं पार्वतीजननम् ॥ १.२३॥

तेजोंशतः शिवाविह हिमाचलेऽनुग्रहाय भूमिजुषाम् ।
दत्तो यत्सान्निध्यं लीलाचारित्रमन्यदिदम् ॥ १.२४॥

एतासामार्याणां जानन्तः शास्त्रसम्मतं भावम् ।
जानीयुर्भवमहिषीं भुवनानामम्बिकां देवीम् ॥ १.२५॥   25

%c01-q2/Nandini.Kuppa/uma-c01-q2|txt medskip

द्वितीयः स्तबकः
सर्गादिवर्णनम् (पञ्चचामरवृत्तम्)

सहादरेण यो वलक्षपारिजातमालया
गलस्थलीविभूषया ध्वनिं विनैव भाषते ।
महेशपुण्ययोषितो मनोज्ञहास एष मे
विभूतये प्रकल्पतां विधूतये च पाप्मनाम् ॥ २.१॥

निरन्तरश्रिते सदा कृपारसप्रवाहिनी
विलासिनीतनुर्विभोः पुमाकृतेर्विमोहिनी ।
सुधातरङ्गकल्पहासभासुरानना शिवा
पदाब्जलम्बिनो धुनोतु पाप्मनः फलं मम ॥ २.२॥

करोति या बिभर्ति या निहन्ति या जगत्त्रयं
समन्ततो विभाति या न दृश्यते क्वचिच्च या ।
अतीव गुप्तरूपिणी गुरूपदेशमन्तरा
न शक्यते बुधैश्च बोद्धुमन्धकारिसुन्दरी ॥ २.३॥

महान्धकारबन्धुरस्य भूतसञ्चयस्य या
विनिद्रितस्य सर्वबीजधाम्नि मौनमुद्रिते ।
समन्ततो विजृम्भणाय भासनाय चाभवन्
महद्विधाय चेष्टितं ममेयमिष्टदेवता ॥ २.४॥

महेशगर्भतः समस्तभूतबीजकोशतः
किरन्त्यशेषविश्वमप्यपारदिव्यवैभवा ।
विचित्रचेष्टयाऽऽद्यया विधूतनाथनिद्रया
जगन्नुता जयत्यसावनादिशक्तिरद्भुता ॥ २.५॥

भवं भणन्ति तान्त्रिकास्त्वदाश्रयं तमव्ययं
समामनन्ति वैदिकाः सदर्चिते सदाह्वयम् ।
न कश्चिदर्थभेद एतदाख्ययोर्द्वयोर्भवे-
द्विदेयमादिमं पदं पुमान्परं नपुंसकम् ॥ २.६॥

स चेद्भवोऽभिधानतो भवान्यसि त्वमव्यये
समीर्यते स सद्यदि त्वमम्ब भण्यसे सती ।
न तेऽस्ति भावता न शक्तिरूपिणी हि विद्यसे
न वेद्मि कालिके कथं सतोऽसतश्च भिद्यसे ॥ २.७॥

जगद्विधानकार्यतः पुरा सुरासुरस्तुते
त्वमम्ब जीवितं भवस्यभावमूलवादिनाम् ।
विकल्पवर्जिता मतिः प्रबोधमूलवादिनां
रसोऽनपेक्ष उत्तमः प्रमोदमूलवादिनाम् ॥ २.८॥

भवत्यसावतो भवान्यनादिरन्तवर्जिता
जगन्ति माति नित्यमोरसौ तदभ्युधाय्युमा ।
रसात्मिकोश्यतेऽखिलैरसौ ततः शिवोच्यते
परैवमीशितुश्चितिस्त्रिधा बुधैरुदीर्यते ॥ २.९॥

चितिः परैव कामना रसेन केनचिद्युता
चितिः परैव सर्वदाऽप्यनस्त्यजस्य तु क्रिया ।
चितिः परैव गोचरावभासिका मतिः स्मृता
त्रितैवमन्यथा चितेश्चिरन्तनैरुदीर्यते ॥ २.१०॥

चिकीर्षति प्रभौ ज्वलत्त्वदीयकीलसन्ततेर्-
विकीर्णधूमजालमेतदम्बरस्थलं ततम् ।
विसृष्टितः पुराऽसि या शिवप्रभुत्वरूपिणी
पृथक्प्रभुश्च लक्षिताऽसि सा सवित्रि पुष्करे ॥ २.११॥

पुनर्विपाकतो घनीभवद्भिरक्षिगोचरै-
स्ततस्ततः समुज्ज्वलैः खसूक्ष्मरेणुगोलकैः ।
अजाण्डवृक्षकोटिकन्दबृन्दवद्व्यधाः पुरा
महेशदृष्टिमय्युमेऽम्ब मण्डलानि भास्वताम् ॥ २.१२॥

तपोऽग्निधूमजालके भवन्ति तैजसाणवो
भवन्ति जीवनाणवो भवन्ति पार्थिवाणवः ।

क्रमेण तद्विसृष्टिरीशशक्तिपाकवैभवे
सहस्रभानुमण्डलं तु गोचरादि गृह्यताम् ॥ २.१३॥

मयूखमालिमण्डले निधाय पादमुग्रया
मयूखशक्तिरूपया त्वयाऽम्ब चेष्टमानया ।
खकोशतः समाहृतैः पुनस्त्रिरूपरेणुभिर्-
व्यधायि मङ्गलादिभिः सह ग्रहैरियं मही ॥ २.१४॥

विसर्जनेन भूयसाऽपि देव्यतृप्तयेयता
विचेष्टितं विलक्षणं पुनर्व्यधीयत त्वया ।
इहान्तरे वसुन्धरामयूखमालिबिम्बयोर्-
अमुष्य कर्मणः सवित्रि चन्द्रमण्डलं फलम् ॥ २.१५॥

वधूपुमाकृती ततो बभूवथुर्युवां शिवे
त्वमीश्वरश्च लीलया विहर्तुमत्र विष्टपे ।
अहो प्रभुं नभस्तनुं त्वदीयगर्भसम्भवा-
द्भणन्ति कालि तत्र चित्रभाषणास्त्वदात्मजम् ॥ २.१६॥

पुमानथो स बिम्बतो हिरण्मयो दिवाकरे
धियाऽपि नैव केवलं हिरण्मयेन वर्ष्मणा ।
इदं तु कार्यरूपमन्यदुच्यते बुधैः प्रभो-
रिहान्तरे नृणां पुनर्वपुस्तदम्ब बिम्बितम् ॥ २.१७॥

स्वयं च काञ्चनप्रकाशवर्ष्मणा प्रभाकरे
तथाऽन्तरे नृणां च तस्य बिम्बिताऽसि सन्निधौ ।
रसस्य देवताऽसि देवि पुष्करे दिवाकरे
मयूखदेवताऽसि भोगदेवताऽसि देहिषु ॥ २.१८॥

विसर्जनेन भूयसा नभस्यमुत्र भास्करे
महीषु चाम्बिके युवां विधाय देहिनो बहून् ।
क्षितेः सुधाकरं गतान् पितॄन् विनेतुमव्यये
तनू च तत्र बभ्रथुः प्रपञ्चराज्ञि मायया ॥ २.१९॥

नभोऽन्तरे हिरण्मयं विभुं प्रचक्षते हरं
दिनेशबिम्बबिम्बितं भणन्ति पङ्कजासनम् ।
इहास्मदन्तरालयं वदन्ति विष्णुमच्युतं
सवित्रि जन्मिनामियं त्रिमूर्तिवादिधोरणि ॥ २.२०॥

नभोऽन्तरे प्रचक्षते हिरण्मयाङ्गमीश्वरं
दिनेशबिम्बपूरुषं हिरण्यगर्भमाख्यया ।
विराजमानमक्षरं विराजमन्तरे नृणां
सवित्रि तत्त्ववेदिनामियं तु नामकल्पना ॥ २.२१॥

हिरण्मयाङ्गमम्बरे वदन्ति सोममम्बिके
दिवाकरस्य मण्डले तु बिम्बितं पुरन्दरम् ।
शरीरिणामिहान्तरेऽग्निमालपन्ति भासुरं
चिरन्तनोक्तिदर्शिनामियं शिवे प्रणालिका ॥ २.२२॥

सरोरुहाक्षवाग्वधूमनोहरौ तु पूर्वव-
त्सुधांशुबिम्बपूरुषस्तु रुद्रसंज्ञकः शिवे ।
हिरण्मयोऽन्तरिक्षजात ईश्वरः सदाशिवः
सदेव वस्तु काञ्चनाङ्गि पञ्चमूर्तिवादिनाम् ॥ २.२३॥

प्रभोः प्रमाऽऽदितस्ततः प्रमावती स्वयं पृथग्
विहायसा शरीरिणी प्रभौ ततो हिरण्मये
हिरण्मयाङ्गनाकृतिर्नभोऽन्तरे च भास्करे
तथाऽन्तरेषु देहिनां महेश्वरी जयत्युमा ॥ २.२४॥

मदीयमम्बिकाऽखिलस्य विष्टपस्य दुष्टधी-
दविष्ठपादपङ्कजा धुनोतु कष्टजालकम् ।
इमे च कोमलैः पदैरमूल्यतल्पशालिन-
स्तदीयमञ्चरूपतां भजन्तु पञ्चचामराः ॥ २.२५॥   50

%c01-q3/Sarada.Susarla/uma-c01-q3-itrans.txt medskip

तृतीयः स्तबकः
सशरीरायाश्च साधनम् (तनुमध्यावृत्तम्)

शुभ्रस्मितलेशो मातुर्मरुतान्नः ।
अन्तस्तिमिराणामन्तं विदधातु ॥ ३.१॥

आद्यौ भुवनानां मातापितरौ तौ ।
देवासुरमर्त्यैर्वन्द्यावविनिन्द्यौ ॥ ३.२॥

ब्रूते पृथगेकस्तौ विग्रहवन्तौ ।
आहैकशरीरं द्वन्द्वं कविरन्यः ॥ ३.३॥

शक्तिं तनुशून्यामीशं च पुमांसम् ।
वक्ति प्रमदायां सन्देहयुतोऽन्यः ॥ ३.४॥

ईशं च तमेके सन्मात्रमुशन्ति ।
ब्रह्मैकमथान्ये गायन्ति न शक्तिम् ॥ ३.५॥

केचित्तनुहीनं प्रज्ञायुतमीशम् ।
शक्तिं विदुरस्य प्रज्ञामविकुण्ठाम् ॥ ३.६॥

उक्तं दधतस्तैः केचित् पुनराहुः ।
मायातनुबन्धं नाथस्य न शक्तेः ॥ ३.७॥

नित्यं सशरीरौ येषां पितरौ तौ ।
एकोऽप्यथवा तान् प्रत्याह निसर्गः ॥ ३.८॥

मातापितरौ यत् तावेकशरीरौ ।
चित्रप्रथनार्था सा काचन लीला ॥ ३.९॥

सन्मात्रकथानां कार्ये मनुजादौ
धीस्वान्तविकासः स्यात्कारणहीनः ॥ ३.१०॥

अद्वैतिभिरन्या मायाऽऽश्रयणीया ।
शक्तेरतिरिक्ता सा किं किमु वादैः ॥ ३.११॥

न स्यात् पृथगात्मा शक्तेः किमुपाधेः ।
चक्षुः श्रितचित्तेर्विश्वाकृतिता वा ॥ ३.१२॥

एकान्तविदेहौ तौ चेदतिसूक्ष्मौ ।
लीलातनुबन्धाशक्तावभिधेयौ ॥ ३.१३॥

भक्ताननुगृह्णन् दिव्याद्भुतलीलः ।
तद्विग्रहबन्धो बोध्यो लसदर्थः ॥ ३.१४॥

स्त्रीत्वं यदि नेष्टं पुंस्त्वं कुत इष्टम् ।
ना वा किमु नारी न स्यादनुमेया ॥ ३.१५॥

तस्मात् पितरौ तौ वाच्यौ मतिमन्तौ ।
सूक्ष्मावपि भूयो लीलातनुमन्तौ ॥ ३.१६॥

नास्मत्तनुवत्ते शक्तीश्वरमूर्ती ।
एकाऽमृतरूपा त्वन्या प्रणवात्मा ॥ ३.१७॥

दिव्यं घनतेजः कुर्वद् ध्वनिमन्तः ।
सम्पश्यदशेषं मूर्तिः प्रणवात्मा ॥ ३.१८॥

दिव्यो घनसोमः स्यंदन् रसमन्तः ।
भुञ्जन् भुवनौघं पीयूषशरीरम् ॥ ३.१९॥

बोधोऽनवलम्बो दिव्यं खलु तेजः ।
मोदः परिशुद्धो दिव्यः खलु सोमः ॥ ३.२०॥

सोमांशमहोंशौ यातो घनभावम् ।
पित्रोर्भुवनानां सङ्कल्पमहिम्ना ॥ ३.२१॥

आराधयसीशं तं चिन्मयकायम् ।
आनन्दमयाङ्गी त्वम् देवि किलेयम् ॥ ३.२२॥

दिव्यं तव कायं दिव्ये तव वस्त्रे ।
दिव्यानि तवाम्ब स्वर्णाभरणानि ॥ ३.२३॥

यद्देवि विलोक्याऽस्यप्राकृतकाया ।
युक्तीः समतीता सेयं तव माया ॥ ३.२४॥

नव्यास्तनुमध्याः प्रत्नां तनुमध्याम् ।
विद्वत्सदसीमाः सम्यक्प्रथयन्तु ॥ ३.२५॥ 75

%c01-q4/Prasad.Kuppa/c01-q4|txt medskip

चतुर्थः स्तबकः
आध्यात्मिकविभूतयः (गीतिवृत्तम्)

अमृतांशुबिंबसाराद् भूयोऽपि विनिर्गतो भृशं सूक्ष्मः ।
सारो गौरीवदनाद् दरहासो हरतु दुःखजालं नः ॥ ४.१॥

कुलकुण्डे प्राणुवन्ती चेतन्ती हृदि समस्तजन्तूनाम् ।
मूर्धनि विचिन्तयन्ती मृत्युञ्जयमहिषि विजयते भवती ॥ ४.२॥

तेजोजलान्नसारैस्त्रयोऽणवो मूलहृदयमस्तेषु
पाकात्ते निष्पन्नास्त्रैलोक्यव्यापिकेऽंब देहवताम् ॥ ४.३॥

पूर्णे शरीरशिल्पे द्वारेण ब्रह्मरन्ध्रसंज्ञेन ।
नाडीपथेन गत्वा तैजसमणुमाविशस्यमेयबले ॥ ४.४॥

अंशेनाविश्यादौ यासि पुनस्तं ततश्च निर्यासि ।
मार्गाभ्यां द्वाभ्यां त्वं नाड्याः पश्चात् पुरश्च सिद्धाभ्याम् ॥ ४.५॥

यातायातविहारे मातस्तस्मिन् भवत्युपाधिस्ते
आरभ्य मस्तकस्थलमामूलाधारमस्थिपञ्जरिका ॥ ४.६॥

नृतनुषु विहरन्तीं त्वाम् उपाधिवीणाकृतेर्जगन्मातः ।
सादृश्यात् कुण्डलिनीं परोक्षवादप्रियाः प्रभाषन्ते ॥ ४.७॥

नभसः शीर्षद्वारा प्रवहन्तीं य इह विग्रहे शक्तिम् ।
अनुसन्दधाति नित्यं कृतिनस्तस्येतरैरलं योगैः ॥ ४.८॥

सर्वेषु विशसि तुल्यं निर्गच्छसि तुल्यमम्ब भुवनानाम् ।
ज्ञाता चेदसि शक्त्यै न ज्ञाता चेद्भवस्यहङ्कृत्यै ॥ ४.९॥

अवतरणं ध्यातं चेद् आरोहणमद्भुतं भवेच्छक्तेः ।
यस्मिन्निदं शरीरं भवति महद्वैद्युताग्नियन्त्रमिव ॥ ४.१०॥

आरोहणमध्यातृषु हृदयेऽहङ्कारमात्रनिष्पत्यै ।
तदनु शरीरमिदं स्यात् सुखाय दुःखाय वा यथाभोगम् ॥ ४.११॥

या व्यक्तिता जनिमतामहङ्कृतिः सकलभेदधीभूमिः ।
पृथगिव तवाम्बिके सा सत्तैवोपाधिसंश्रयाद् भान्ती ॥ ४.१२॥

एतामाहुरविद्यां बीजं संसारवृक्षराजस्य ।
सर्वरसफलयुतस्य प्रारब्धजलेन देवि दोहदिनः ॥ ४.१३॥

व्यक्तित्वार्पकदेहे निम्ने कुल्येव जनिमतां मातः ।
प्रवहत्यनारतं ते शक्तिश्चित्राणि देवि तन्वाना ॥ ४.१४॥

सारमपामणुभूतं हृदयस्थं सूरयो विदुश्चित्तम् ।
श्रेष्ठं प्राणं केचन पञ्चानिलमूलभूतमाहुरिमम् ॥ ४.१५॥

मन एव चित्तसंज्ञं व्यवहरतां विभजनानभिज्ञानाम् ।
कविलोकव्यवहारस्तदधीनस्तत्त्वधीर्भवत्यन्या ॥ ४.१६॥

तदनाहतस्य विलसद् दक्षिणतो दहरनामकगुहायाम् ।
चित्तं कुलकुण्डात्ते काऽप्यनुगृह्णाति देवि रश्मिकला ॥ ४.१७॥

चित्तमणु श्लिष्टं ते कलयाऽङ्गुष्ठप्रमाणमिव भासा ।
दर्पणममलब्रह्मप्रतिबिम्बाकर्षकं शिवे भवति ॥ ४.१८॥

अन्तरमावर्ताभं प्रतिबिम्बमकायमेतदीशस्य ।
अंगुष्ठाभं प्राहुर्मानेनोपाधिचैत्तभासस्ते ॥ ४.१९॥

दम्पत्योर्वा रूपप्रतिबिम्बौ चक्षुषोः शिवे भवतः ।
कुलकुण्डे हृदये चाप्यरूपयोरेव कश्चिदुल्लासः ॥ ४.२०॥

चित्तमणीयो वित्तं य इदं मूल्ये प्रपञ्चतोऽप्यधिकम् ।
हृदयगुहायां निहितं जानीते स विजहाति बहिराशाः ॥ ४.२१॥

अप्राप्ता मूर्धानं हृदयात् सम्प्रस्थिता धृता नाड्या ।
त्वद्रुचिरुक्ता बुद्धिस्त्वयि निष्ठा भवति देवि तन्निष्ठा ॥ ४.२२॥

अन्नमयाणुं प्राप्तं धीज्योतिश्चन्द्रमार्कमिव तेजः ।
परिभाष्यते महेश्वरि मन इति सङ्कल्पसम्भवस्थानम् ॥ ४.२३॥

सङ्कल्पे सङ्कल्पे चिच्छक्तिं मनसि विस्फुरन्तीं त्वाम् ।
य उपास्ते स जनस्ते गृह्णाति महेशवल्लभे चरणम् ॥ ४.२४॥

आधारचक्रशयने ममेह निद्रां विहाय विचलन्तीम् ।
गीतय एताः परमामुपतिष्ठन्तां जगद्विभोः कान्ताम् ॥ ४.२५॥ 100

॥ समाप्तं च प्रथमं शतकम् ॥

%c02-q1/Ravi.Shamavedam/uma-c02-q1।txt medskip

द्वितीयं शतकम्
पञ्चमः स्तबकः
परिणयः (उपजातिवृत्तम्)

श्रीखण्डचर्चामिव कल्पयन्त्यो
मुहुः कपोलेषु सखीजनस्य ।
श्रीकण्ठकान्ताहसिताङ्कुराणां
श्रीमन्ति कुर्वन्तु जगन्ति भासः ॥ ५.१॥

कीर्तिर्वलक्षा कुसुमायुधस्य
स्वर्णाद्रिकोदण्डजयोन्नतस्य ।
दरस्मितश्रीर्द्विरदास्यमातुर्-
द्राघीयसीं वो वितनोतु भूतिम् ॥ ५.२॥

प्रमथ्यमानामृतराशिवीचि-
प्रोद्गच्छदच्छाच्छतुषारकल्पाः ।
युष्माकमिच्छां विदधत्वमोघां
विघ्नेशमातुर्दरहासलेशाः ॥ ५.३॥

चन्द्रातपः कश्चन सम्प्रसन्नो
महेशनेत्रातिथितर्पणो नः ।
मनोभिलाषं सफलीकरोतु
महेश्वरीहासलवप्रकाशः ॥ ५.४॥

वलक्षवक्षोजपटाञ्चलेन
चलेन सार्धं कृतकेलयो नः ।
पुरत्रयारातिकलत्रहास-
भासो निरासं विपदां क्रियासुः ॥ ५.५॥

भूयासुरायासहराणि तानि
स्मितानि भूतेशमृगीदृशो नः ।
येषां त्विषो बिभ्रति दिग्वधूटी-
गण्डेषु कर्पूरपरागलीलाम् ॥ ५.६॥

कुर्वन्तु कामं सफलं (त्व) मदीयं
कुलाद्रिकन्याहसितानि तानि ।
येषां मयूखैः क्रियते सिताद्रेर्-
उद्यानवाटीषु नवो वसन्तः ॥ ५.७॥

आम्रेडितं भूषणचन्द्रभासां
नासाविभूषामहसां द्विरुक्तिः ।
पुरारिनारीस्मितकान्तयो मे
पूर्णानि कुर्वन्तु समीहितानि ॥ ५.८॥

निर्माय विश्वालयमम्ब शर्व-
स्त्वया समं शिल्पविदा स शिल्पी ।
विहर्तुमिच्छन्नयि वोढुमैच्छ-
न्नारीं भवन्तीं पुरुषो भवंस्त्वाम् ॥ ५.९॥

दिव्यं दुकूलं धवलं दधाना
वेण्या फणीन्द्रोपमया लसन्ती ।
प्रफुल्लराजीवविलोचना त्वं
प्रपञ्चभर्तुर्नयनान्यहार्षीः ॥ ५.१०॥

प्रत्यङ्गबन्धं ज्वलदुत्तमं ते
भुजङ्गराजोपमवेणिरूपम् ।
आत्मैकनिष्ठस्य च विश्वभर्तुर्-
आराधयामास विलोचनानि ॥ ५.११॥

अभूस्त्वमाद्यस्य मनोमदाय
स चापि ते प्रीतिपदं बभूव ।
न केवलं वां सकलस्य चासी-
द्दाम्पत्यबन्धस्य तदम्ब बीजम् ॥ ५.१२॥

तवातिकान्ता नयानान्तवृत्ति-
र्हासः पुरारेश्च नवेन्दुहारी ।
उभौ विवाहोत्सवपूर्वरङ्गं
निर्वर्तयामासतुरादिरामे ॥ ५.१३॥

दातुं प्रभुः सान्त्वयितुं समर्थः
कर्तुं क्षमस्तर्जयितुं च शक्तः ।

संरक्षतान्मां तव सर्ववन्द्ये
करस्तुषारांशुभृता गृहीतः ॥ ५.१४॥

स्प्रष्टुं न शक्या परमे परैस्त्वं
स चान्यया चिन्तयितुं न शक्यः ।
त्वमेव शर्वस्य स एव तेऽम्ब
दाम्पत्यमेवं युवयोस्तु सत्यम् ॥ ५.१५॥

निजाद्वतंसेन्दुत इन्दुमन्य-
मुत्पाद्य ते शम्भुरदाद्वतंसम् ।
मूर्तामिवासौ शुभगात्रि रात्रिं
प्राप्य त्वदीयां कबरीं चकासे ॥ ५.१६॥

बभूविथागेन्द्रगृहे यदा त्वं
स चेश्वरस्तत्र चकार वासम् ।
विलोकमानस्तव देवि विद्युत्
पाञ्चालिकायाः कमनीयभावम् ॥ ५.१७॥

सिद्धं स वां साधयितुं प्रवृत्तो
योगं प्रदग्धो मदनश्च कल्पे ।
वशीति कीर्तिं गिरिशस्य भर्तुं
तुभ्यं त्वपर्णेति यशश्च कर्तुम् ॥ ५.१८॥

घोरं तपश्चेद्रचितं त्वयाऽपि
प्राग्रूपभर्तुः समनुग्रहाय ।
विहाय यत्नं क इहाखिलाऽम्ब
सम्बद्धमप्यर्थमुपैतु जन्तुः ॥ ५.१९॥

ज्वलत्कपर्दो दहनाङ्कभालः
कपालमाली करिकृत्तिवासाः ।
भुजङ्गभूषो भसिताङ्गरागः
पुष्पेषु वैरी परुषाट्टहासः ॥ ५.२०॥

श्मशानवासी पुरुषस्त्रिशूली
जहार ते चेदनघाङ्गि चेतः ।
दृष्टान्तमर्थोऽयमवाप नैव
प्रीतिर्बहिःकारणमाश्रितेति ॥ ५.२१॥

रूपं पुरारेरथवा तदेतत्
सेयं च चेष्टा समयान्तरेषु ।
कान्तं वपुः कान्ततराश्च लीला-
स्त्वया समं खेलितुमेष धत्ते ॥ ५.२२॥

प्रहृष्टयक्षः समवेतसिद्धो
नृत्यद्गणेन्द्रो विकसन्मुनीन्द्रः ।
भूयोऽपि योगो युवयोर्हिमाद्रौ
बभार मातर्महमद्वितीयम् ॥ ५.२३॥

महेश्वरस्त्वां परिणीय लेभे
यावात्मजौ द्वावनघाङ्गि मुख्यौ ।
एकस्तयोर्भ्राम्यति विश्वमत्तुं
भूभृत्तटीराश्रयते बतान्यः ॥ ५.२४॥

सङ्कीर्तयन्त्यो जगतां जनन्याः
कल्याणवार्ताः कमनीयकीर्तेः ।
इमाः प्रमोदाय सतां भवन्तु
सन्दर्भशुद्धा उपजातयो नः ॥ ५.२५॥   125

%c02-q2/Bhoga.Pappu/uma-02-q2-itrans.txt medskip

षष्ठः स्तबकः
माहाभाग्यम् (मदलेखावृत्तम्)

हर्तारः शशिकीर्तेः कर्तारो नवभासाम् ।
भर्तारो मम सन्तु स्कन्दाम्बादरहासाः ॥ ६.१॥

दिग्वल्लीष्वतिशुभ्रां कुर्वन्तः कुसुमर्द्धिम् ।
भूयासुस्तव भूत्यै मन्मातुः स्मितलेशाः ॥ ६.२॥

एकश्चेत्तव शक्तो ब्रह्माण्डस्य भवाय ।
भर्गप्रेयसि हासः किं स्तोत्रं तव भूयः ॥ ६.३॥

उद्याने वियदाख्ये कालि त्वां विहरन्तीम् ।
गोलैः कन्दुककल्पैरल्पा वाक्किमु माति ॥ ६.४॥

खं क्रीडाभवनं ते कः कार्यालय एषः ।
पृथ्वीयं बहुलान्ना मातर्भोजनशाला ॥ ६.५॥

बुद्धीनामसि दात्री सिद्धीनामसि नेत्री ।
वीर्याणामसि पेटी कार्याणामसि धाटी ॥ ६.६॥

विद्यानामसि भावो हृद्यानामसि हावः ।
देवानामसि लीला दैत्यानामसि हेला ॥ ६.७॥

गन्तॄणामसि चेष्टा स्थाणूनामसि निष्ठा ।
लोकानामसि मूलं लोकादेरसि जालम् ॥ ६.८॥

देवी व्यापकतेजः शक्तिस्तत्त्वविचारे ।
अत्यन्तं सुकुमारी नारी मूर्तिविचारे ॥ ६.९॥

क्व ज्योतिर्महतोऽस्मादाकाशादपि भूयः ।
तत्सर्वं विनयन्ती तन्वङ्गी क्व नु नारी ॥ ६.१०॥

देवेन्द्राय विभुत्वं सूर्यायोस्रसहस्रम् ।
ऊष्माणं दहनाय ज्योत्स्नामोषधिराजे ॥ ६.११॥

वातायामितवीर्यं विस्तारं गगनाय ।
सान्द्रत्वं वसुधायै तोयाय द्रवभावम् ॥ ६.१२॥

माहाभाग्यमपारं कोटिभ्यो विबुधानाम् ।
चित्राः काश्चन सिद्धीर्लक्षेभ्यो मनुजानाम् ॥ ६.१३॥

स्थाणुभ्यो धृतिशक्तिं गन्तृभ्यो गतिशक्तिम् ।
कस्माच्चिन्निजकोशादेका देवि ददाना ॥ ६.१४॥

आश्चर्यं विदधाना सर्वं वस्तु दधाना ।
हन्त त्वं मम मातः काचित्कोमलगात्री ॥ ६.१५॥

श्रोणीभारनतायां कस्याञ्चित्तनुगात्र्याम् ।
ईदृक्षा यदि शक्तिः कावेतो ननु माया ॥ ६.१६॥

रूपं ते तनुगात्रं वाणी ते मृदुनादा ।

चापं ते मधुरेक्षुः पाणिस्ते सुकुमारः ॥ ६.१७॥

लोले लोचनयुग्मे भीरुत्वं प्रकटं ते ।
ब्रह्माण्डं त्वदधीनं श्रद्धत्तामिह को वा ॥ ६.१८॥

भ्रूभङ्गं कुरुषे चेन्मुग्धे गौरि मुखाब्जे ।
भूतान्यप्ययि बिभ्यत्येजेरन्नपि ताराः ॥ ६.१९॥

शुद्धान्तेश्वरि शम्भोरिच्छा चेत्तव काऽपि ।
घोरोऽग्निस्तृणगर्भाद्घोराग्नेरपि शैत्यम् ॥ ६.२०॥

द्रष्टुं विश्वमपारं भारस्ते दयितस्य ।
कर्तुं कार्यमशेषं श्रीमातस्तव भारः ॥ ६.२१॥

साक्षी केवलमीशः कर्तुं भर्तुमुताहो ।
हर्तुं वाऽखिलमम्ब त्वं साक्षाद्धृतदीक्षा ॥ ६.२२॥

कारङ्कारमुमे यद् ब्रह्माण्डानि निहंसि ।
तन्मन्ये सुरमान्ये बालैवाऽम्ब सदा त्वम् ॥ ६.२३॥

लीलोज्जीवितकामे रामे शङ्करसक्ते ।
त्वत्पादार्चनसक्तं भक्तं मां कुरु शक्तम् ॥ ६.२४॥

एताः पावनगन्धाः सर्वेशप्रमदे ते ।
हैरम्ब्यो मदलेखाः सन्तोषाय भवन्तु ॥ ६.२५॥ 150

%c02-q3/Amrutha.Kuppa/c02-q3-b.txt medskip

सप्तमः स्तबकः
व्योमशरीरा, मातृकादिविभूतयश्च (वसन्ततिलकावृत्तम्)

वाणीसरोरुहदृशो हयराजहंसो
वक्त्रारविन्दनिलयाद्बहिरागतायाः ।
आलापकालदरहास इह स्थितानां
क्षेमं करोतु सुतरां हरसुन्दरीयः ॥ ७.१॥

नादोऽसि वागसि विभाऽसि चिदस्यखण्डा
खण्डीभवन्त्यपि चिदस्यखिलेन्द्रकान्ते ।
तत्तादृशीं निखिलशक्तिसमष्टिमीशे
त्वामन्तरिक्षपरिक्लृप्ततनुं नमामि ॥ ७.२॥

विश्वप्रसिद्धविभवास्त्रिषु विष्टपेषु
याः शक्तयः प्रविलसन्ति परःसहस्राः ।
तासां समष्टिरतिचित्रनिधानदृष्टिः
सृष्टिस्थितिप्रलयकृद् भुवनेश्वरि त्वम् ॥ ७.३॥

जाने न यत्तव जगज्जनयित्रि रूपं
सङ्कल्प्यते किमपि तन्मनसो बलेन ।
सङ्कल्पितस्य वपुषः श्रितशोकहन्त्रि
विन्यस्यते तव वचोतिगधाम नाम ॥ ७.४॥

कामं वदन्तु वनितामितिहासदक्षा-
स्त्वां सर्वलोकजनयित्रि सदेहबन्धाम् ।
सत्यं च तद्भवतु सा तव काऽपि लीला
दिव्यं रजस्तु तव वास्तविकं शरीरम् ॥ ७.५॥

भूजन्मपांसुभिरगर्हितशुद्धरूपा
या काऽपि पांसुपटली विपुलेऽन्तरिक्षे ।
सा ते तनुः सुमहती वरदे सुसूक्ष्मा
तामेव देवसरणिं कथयन्ति धीराः ॥ ७.६॥

या देवि देवसरणिर्भवमग्नदुर्गा
वैरोचनीति कथिता तपसा ज्वलन्ती ।
राजीवबन्धुमहसा विहिताङ्गरागा
सा ते तनुर्भवति सर्वसुपर्ववर्ण्ये ॥ ७.७॥

प्राणास्तवात्र हृदयं च विराजतेऽत्र
नेत्राणि चात्र शतशः श्रवणानि चात्र ।
घ्राणानि चात्र रसनानि तथा त्वचश्च
वाचोऽत्र देवि चरणानि च पाणयोऽत्र ॥ ७.८॥

सर्वत्र पश्यसि शृणोषि च सर्वतोऽम्ब
सर्वत्र खादसि विजिघ्रसि सर्वतोऽपि ।
सर्वत्र च स्पृशसि मातरभिन्नकाले

कः शक्नुयान्निगदितुं तव देवि भाग्यम् ॥ ७.९॥

सर्वत्र नन्दसि विमुञ्चसि सर्वतोऽम्ब
सर्वत्र संसरसि गर्जसि सर्वतोऽपि ।
सर्वत्रदेवि कुरुषे तव कर्मजाल-
वैचित्र्यमीश्वरि निरूपयितुं क्षमः कः ॥ ७.१०॥

विश्वाम्बिके त्वयि रुचां पतयः कियन्तो
नानाविधाब्धिकलिता क्षितयः कियत्यः ।
बिम्बानि शीतमहसां लसतां कियन्ति
नैतच्च वेद यदि को विबुधो बहुज्ञः ॥ ७.११॥

अव्यक्तशब्दकलयाऽखिलमन्तरिक्षं
त्वं व्याप्य देवि सकलागमसम्प्रगीते ।
नादोऽस्युपाधिवशतोऽथ वचांसि चासि
ब्राह्मीं वदन्ति कवयोऽमुकवैभवां त्वाम् ॥ ७.१२॥

नानाविधैर्भुवनजालसवित्रि रूपैर्-
व्याप्तैकनिष्कलगभीरमहस्तरङ्गैः ।
व्यक्तं विचित्रयसि सर्वमखर्वशक्ते
सा वैष्णवी तव कला कथिता मुनीन्द्रैः ॥ ७.१३॥

व्यक्तित्वमम्ब हृदये हृदये दधासि
येन प्रभिन्न इव बद्ध इवान्तरात्मा ।
सेयं कला भुवननाटकसूत्रभर्त्रि
माहेश्वरीति कथिता तव चिद्विभूतिः ॥ ७.१४॥

आहारशुद्धिवशतः परिशुद्धसत्त्वे
नित्यस्थिरस्मृतिधरे विकसत्सरोजे ।
प्रादुर्भवस्यमलतत्त्वविभासिका या
सा त्वं स्मृता गुरुगुहस्य सवित्रि शक्तिः ॥ ७.१५॥

हव्यं यया दिविषदो मधुरं लभन्ते
कव्यं यया रुचिकरं पितरो भजन्ते ।
अश्नाति चान्नमखिलोऽपि जनो ययैव
सा ते वराहवदनेति कलाऽम्ब गीता ॥ ७.१६॥

दुष्टान्निहंसि जगतामवनाय साक्षा-

दन्यैश्च घातयसि तप्तबलैर्महद्भिः ।
दम्भोलिचेष्टितपरीक्ष्यबला बलारेः
शक्तिर्न्यगादि तव देवि विभूतिरेषा ॥ ७.१७॥

सङ्कल्परक्तकणपानविवृद्धशक्त्या
जाग्रत्समाधिकलयेश्वरि ते विभूत्या ।
मूलाग्निचण्डशशिमुण्डतनुत्रभेत्र्या
चामुण्डया तनुषु देवि न किं कृतं स्यात् ॥ ७.१८॥

त्वं लोकराज्ञि परमात्मनि मूलमाया
शक्रे समस्तसुरभर्तरि जालमाया ।
छायेश्वरान्तरपुमात्मनि योगमाया
संसारसक्तहृदयेष्वसि पाशमाया ॥ ७.१९॥

त्वं भूतभर्तरि भवस्यनुभूतिनिद्रा
सोमस्यपातरि बिडौजसि मोदनिद्रा ।
सप्ताश्वबिम्बपुरुषात्मनि योगनिद्रा
संसारमग्नहृदयेष्वसि मोहनिद्रा ॥ ७.२०॥

विष्णुश्चकार मधुकैटभनाशनं यन्-
मुक्तः सहस्रदलसम्भवसंस्तुता सा ।
काली घनाञ्जननिभप्रभदेहशालि-
न्युग्रा तवाम्ब भुवनेश्वरि कोऽपि भागः ॥ ७.२१॥

विद्युत्प्रभामयमधृष्यतमं द्विषद्भि-
श्चण्डप्रचण्डमखिलक्षयकार्यशक्तम् ।
यत्ते सवित्रि महिषस्य वधे स्वरूपं
तच्चिन्तनादिह नरस्य न पापभीतिः ॥ ७.२२॥

शुम्भं निशुम्भमपि या जगदेकवीरौ
शूलाग्रशान्तमहसौ महती चकार ।
सा कौशिकी भवति काशयशाः कृशोद-
र्यात्माङ्गजा तव महेश्वरि कश्चिदंशः ॥ ७.२३॥

माये शिवे श्रितविपद्विनिहन्त्रि मातः
पश्य प्रसादभरशीतलया दृशा माम् ।
एषोऽहमात्मजकलत्रसुहृत्समेतो
देवि त्वदीयचरणं शरणं गतोऽस्मि ॥ ७.२४॥

धिन्वन्तु कोमलपदाः शिववल्लभाया-
श्चेतो वसन्ततिलकाः कविकुञ्जरस्य ।
आनन्दयन्तु च पदाश्रितसाधुसङ्घं
कष्टं विधूय सकलं च विधाय चेष्टम् ॥ ७.२५॥   175

%c02-q4/Shailaja.Dhulipala/umasahasram_ashtamasthabakam.txt medskip

अष्टमः स्तबकः
चरित्रत्रयम् (अनुष्टुब्वृत्तम्)

तमसामभितो हन्ता चण्डिकाहासवासरः ।
सतां हृदयराजीवविकासाय प्रकल्पताम् ॥ ८.१॥

या निद्रा सर्वभूतानां योगनिद्रा रमापतेः ।
ईड्यतां सा महाकाली महाकालसखी सखे ॥ ८.२॥

विरिञ्चिना स्तुते मातः कालि त्वं चेन्न मुञ्चसि ।
मधुकैटभसंहारं करोतु कथमच्युतः ॥ ८.३॥

वासवः काशनीकाशयशोलङ्कृतदिङ्मुखः ।
महोग्रविक्रमाद्यस्मादासीदाजौ पराङ्मुखः ॥ ८.४॥

यत्प्रतापेन सन्तप्तो मन्ये बाडबरूपभृत् ।
भगवाननलोऽद्यापि सिन्धुवासं न मुञ्चति ॥ ८.५॥

कुर्वाणे भूतकदनं यस्मिन्विस्मितचेतसः ।
एष एवान्तको नाहमित्यासीदन्तकस्य धीः ॥ ८.६॥

रणे येनातिरस्कृत्य त्यक्तो राक्षस इत्यतः ।
चिराय हरिदीशेषु कोणेशः प्राप्तवान्यशः ॥ ८.७॥

यन्नियन्तुमशक्तस्य कुर्वाणमसतीः क्रियाः ।
नियन्तुरसतामासीत्पाशिनो मलिनं यशः ॥ ८.८॥

बाहुवीर्यपराभूतो यस्य प्रायेण मारुतः ।

बभूव क्षणदान्तेषु रतान्तपरिचारकः ॥ ८.९॥

निधीन्येन जितो हित्वा राजराजः पलायितः ।
स्पष्टं बभाण माधुर्यं प्राणानामखिलादपि ॥ ८.१०॥

यस्मिन्नुत्तरपूर्वस्या दिश एकादशाधिपाः ।
कुण्ठा बभूवुरात्मीयकण्ठोपमितकीर्तयः ॥ ८.११॥

निजशुद्धान्तकान्तानामाननैरेव निर्जितम् ।
ललज्जे यः पुनर्जित्वा शूरमानी सुधाकरम् ॥ ८.१२॥

बालस्येव क्रीडनकैः प्रवीरैर्यस्य खेलतः ।
लीलाकन्दुकधीरासीद्देवे दीधितिमालिनि ॥ ८.१३॥

त्रियामाचरशुद्धान्तभ्रूविलासनिवारणम् ।
विष्णोः सुदर्शनं चक्रं यस्य नापश्यदन्तरम् ॥ ८.१४॥

महिषं तं महावीर्यं या सर्वसुरदेहजा ।
अवधीद्दानवं तस्यै चण्डिकायै नमो नमः ॥ ८.१५॥

मुखं तवासेचनकं ध्यायं ध्यायं निरन्तरम् ।
मृगेन्द्रवाहे कालेन मृडस्त्वन्मुखतां गतः ॥ ८.१६॥

कार्तिकीचन्द्रवदना कालिन्दीवीचिदोर्लता ।
अरुणाम्भोजचरणा जयति त्रिरुचिः शिवा ॥ ८.१७॥

यत्ते कचभरः कालो यद्बाहुर्लोकरक्षकः ।
युक्तं द्वयं शिवे मध्यस्त्वसन्नाको न नाकराट् ॥ ८.१८॥

स्वदेहादेव या देवी प्रदीपादिव दीपिका ।
आविर्बभूव देवानां स्तुवतां हर्तुमापदः ॥ ८.१९॥

धैर्यचातुर्यगाम्भीर्यवीर्यसौन्दर्यशालिनीम् ।
रत्नं नितम्बिनीजातौ मेनिरे यां सुरासुराः ॥ ८.२०॥

यदीयहुङ्कृत्यनले धूम्राक्षोऽभवदाहुतिः ।
समाप्तिं भीषणं यावन्नैवावाप विकत्थनम् ॥ ८.२१॥

चामुंडाशिवदूत्यौ यत् कले दारुणविक्रमे ।
भक्षयामासतुर्मूर्तीः कीर्तिभिः सह रक्षसाम् ॥ ८.२२॥

यस्याः शूले जगामास्तं यशः शुम्भनिशुम्भयोः ।
नमामि विमलश्लोकां कौशिकीं नाम तामुमाम् ॥ ८.२३॥

यशोदागर्भजननाद् यशोदां गोकुलस्य ताम् ।
वन्दे भगवतीं नन्दां विन्ध्याचलनिवासिनीम् ॥ ८.२४॥

अम्बिकामुपतिष्ठन्तामेताश्चण्डीमनुष्टुभः ।
प्रसन्नाः साध्वलङ्काराः सिद्धपद्मेक्षणा इव ॥ ८.२५॥   200

॥ समाप्तं च द्वितीयं शतकम् ॥

% c03-q1/Vijay.Sai.Reddy/c03-q1|txt medskip

तृतीयं शतकम्
नवमः स्तबकः
मन्दहासः (आर्यावृत्तम्)

शारदवलक्षपक्षक्षणदावैमल्यशिक्षकोऽस्माकम् ।
जागर्तु रक्षणाय स्थाणुपुरन्ध्रीमुखविकासः ॥ ९.१॥

व्याख्यानं हर्षस्य प्रत्याख्यानं शरत्सुधाभानोः ।
दिशतु हृदयप्रसादं गौरीवदनप्रसादो नः ॥ ९.२॥

अन्तर्गतस्य हर्षक्षीरसमुद्रस्य कश्चन तरङ्गः ।
हासो हरहरिणदृशो गतपङ्कं मम करोतु मनः ॥ ९.३॥

दिशि दिशि विसर्पदंशुप्रशमिततापं परास्तमालिन्यम् ।
कुशलानि प्रदिशतु नः पशुपतिहृदयेश्वरीहसितम् ॥ ९.४॥

अन्तर्गतं च तिमिरं हरन्ति विहसन्ति रोहिणीकान्तम् ।
हसितानि गिरिशसुदृषो मम प्रबोधाय कल्पन्ताम् ॥ ९.५॥

भाषातुषारदीधितिदीधित्या सह विहायसो रङ्गे ।

विचरन् पुरहरतरुणीदरहासो मे हरत्वेनः ॥ ९.६॥

रुद्राणीदरहसितान्यस्माकं संहरन्तु दुरितानि ।
येषामुदयो दिवसो भूषापीयूषकिरणस्य ॥ ९.७॥

स्कन्दजननीमुखेन्दोरस्मान् पुष्णातु सुस्मितज्योत्स्ना ।
मुनिमतिकैरविणीनामुल्लासकथा यदायत्ता ॥ ९.८॥

कमनीयकण्ठमालामुक्तामणितारकावयस्यो नः ।
कामान् वितरतु गौरीदरहासो नाम धवलांशुः ॥ ९.९॥

अनवद्यकण्ठमालामुक्तावलिकिरणनिवहसहवासी ।
हरदयितादरहासो हरतु ममाशेषमज्ञानम् ॥ ९.१०॥

ज्ञ इव ज्ञद्दश्य उत्तम इलाधराधीशनन्दिनीहासः ।
पूर्णं करोतु मानसमभिलाषं सर्वमस्माकम् ॥ ९.११॥

आलोकमात्रतो यः शङ्करमसमास्त्रकिङ्करं चक्रे ।
अल्पोऽप्यनल्पकर्मा हासो नः पातु स शिवायाः ॥ ९.१२॥

स्मरमतरतमीशं यः करोति भावप्रसङ्गचातुर्या ।
द्विजगणपुरस्कृतोऽव्यात् स शिवाहासप्रवक्ता नः ॥ ९.१३॥

रदवाससा रथी मां शरी करैः पातु पार्वतीहासः ।
पावकदृशं जिगीषोः पञ्चपृषत्कस्य सेनानीः ॥ ९.१४॥

शिवहृदयमर्मभेदि स्मितं तदद्रीशवंशमुक्तायाः ।
दशनद्युतिद्विगुणितश्रीकं शोकं धुनोतु मम ॥ ९.१५॥

ब्रह्माण्डरङ्गभाजो नट्याः शिवसूत्रधारसहचर्याः ।
श्रीवर्धनोऽनुलेपो मुखस्य हासः पुनात्वस्मान् ॥ ९.१६॥

अधरप्रवालशयने नासाभरणप्रभाविलासिन्या ।
रममाणो हररमणीहासयुवा हरतु नः शोकम् ॥ ९.१७॥

अधरोष्ठवेदिकायां नासाभरणांशुशाबकैः साकम् ।
कुलमखिलमवतु खेलन्नद्रिसुताहासबालो नः ॥ ९.१८॥

अनुलेपनस्य वीप्सा द्विर्भावः कुचतटीदुकूलस्य ।
हरतु हृदयव्यथां मे हसितं हरजीवितेश्वर्याः ॥ ९.१९॥

गिरिशाङ्गरागभसितं स्वागतवचसाऽभिनन्ददादरतः ।
गिरिजालीलाहसितं गरीयसीं मे तनोतु धियम् ॥ ९.२०॥

दयितेन सँल्लपन्त्याः सह तुहिनमरीचिशिशुकिरीटेन ।
वागमृतबुद्बुदोऽव्यादलसो मामगभुवो हासः ॥ ९.२१॥

शुद्धः कुचाद्रिनिलयादपि मुक्ताहारतो हरपुरन्ध्र्याः ।
वदनश्रीप्रासादे विलसन् हासोऽलसोऽवतु माम् ॥ ९.२२॥

व्यर्थीभूते चूते गतवति परिभूतिमसितजलजाते ।
अनिते सिद्धिमशोके कमलेऽपि गलज्जयश्रीके ॥ ९.२३॥

बहुधा बिभेद हृदयं हरस्य बाणेन येन सुमबाणः ।
तदुमालीलाहसितं मल्लीसुममस्तु मे भूत्यै ॥ ९.२४॥

अमलदरस्मितचिह्नास्ता एताः सर्वमङ्गला आर्याः ।
कमनीयतमास्वसमामुपतिष्ठन्तामुमां देवीम् ॥ ९.२५॥ 225

%c03-q2/Sriarsha.Pvss/Umashahasram-c03-q02।txt medskip

दशमः स्तबकः
केशादिपादान्तवर्णनम् (ललितावृत्तम्)

सङ्क्षालनाय हरितां विभूतये
लोकत्रयस्य मदनाय धूर्जटेः ।
कात्यायनीवदनतः शनैः शनैर्-
निर्यन्ति शुभ्रहसितानि पान्तु नः ॥ १०.१॥

स्वल्पोऽपि दिक्षु किरणान् प्रसारयन्
मन्दोऽपि बोधममलं दधत्सताम् ।
शुभ्रोऽपि रागकृदनङ्गवैरिणो
हासः पुराणसुदृशः पुनातु नः ॥ १०.२॥

चेतोहरोऽप्यतिजुगुप्सितो भवेत्
सर्वोऽपि जीवकलया यया विना ।
सा वर्ण्यतां कथमपारचारुता
पीयूषसिन्धुरखिलेन्द्रसुन्दरी ॥ १०.३॥

अत्यल्पदेववनितां च पार्थिवैर्-
भावैर्वयं तुलयितुं न शक्नुमः
तां किं पुनः सकलदेवसुन्दरी ।
लोकाक्षिपारणतनुप्रभामुमाम् ॥ १०.४॥

वर्षापयोदपटलस्य सान्द्रता
सूर्यात्मजोर्मिचयनिम्नतुङ्गता ।
कालाहिभूमिपतिदीर्घता च ते
केशेषु भर्गभवनेश्वरि त्रयम् ॥ १०.५॥

ईशानसुन्दरि तवास्यमण्डला-
न्नीचैर्नितान्तममृतांशुमण्डलम् ।
को वा न कीर्तयति लोष्टपिण्डकं
लोके निकृष्टमिह मानवीमुखात् ॥ १०.६॥

बिभ्रत्यमर्त्यभुवनस्थदीर्घिका
पङ्केरुहाणि वदनाय ते बलिम् ।
नो चेत् कथं भवति सौरभं मह-
द्भिन्ने सुमेभ्य उरुकेशि ते मुखे ॥ १०.७॥

गीर्वाणलोकतटिनीजलेरुहां
गन्धे शुभे भवतु ते मनोरतिः ।
लोकाधिराज्ञि तव वक्त्रसौरभे
लोकाधिराजमनसस्तु सम्मदः ॥ १०.८॥

को भाषतां तव सवित्रि चारुतां
यस्याः स्मितस्य धवलद्युतिर्लवः ।
यस्याः शरीररुचिसिन्धुवीचयः
शम्पालताः पृथुलदीप्तिभूमयः ॥ १०.९॥

लोकाम्बिके न विलसन्ति के पुरो
मन्दस्मितस्य तव रोचिषां निधेः ।
ये तु व्यधायिषत तेन पृष्ठतो

हन्तैषु काऽपि तिमिरच्छटा भवेत् ॥ १०.१०॥

किं वा रदावलिरुचिर्मुखस्य किं
सम्फुल्लता वरधियः किमूर्मिका ।
सन्तोषपादपसुमं नु शङ्कर-
प्रेमस्वरूपमुत देवि ते स्मितम् ॥ १०.११॥

दिक्षु प्रकाशपटलं वितन्वता
कोटिप्रभाकरविभक्ततेजसा ।
नेत्रेण ते विषमनेत्रवल्लभे
पङ्केरुहं क उपमाति पण्डितः ॥ १०.१२॥

श्रीकर्ण एष तव लोचनाञ्चले
भान्त्या दयादयितया प्रबोधितः ।
एतं सवित्रि मम कञ्चन स्तवं
श्रुत्वा तनोतु भरतावनेः श्रियम् ॥ १०.१३॥

स्वा नासिका भवति युञ्जतां सतां
संस्तम्भिनी चलतमस्य चक्षुषः ।
त्वन्नासिका पुरहरस्य चक्षुषः
संस्तम्भिनी भवति चित्रमम्बिके ॥ १०.१४॥

बिम्बप्रवालनवपल्लवादितः
पीयूषसारभरणाद् गुणाधिकः ।
गोत्रस्य पुत्रि शिवचित्तरञ्जकः
श्रेष्ठो नितान्तमधराधरोऽपि ते ॥ १०.१५॥

दोर्वल्लिके जननि ते तटित्प्रभा-
मन्दारमाल्यमृदुतापहारिके ।
निश्शेषबन्धदमनस्य धूर्जटेर्-
बन्धाय भद्रचरिते बभूवतुः ॥ १०.१६॥

हस्ताब्जयोस्तव मृदुत्वमद्भुतं
गृह्णाति ये सदयमेव धूर्जटिः
अत्यद्भुतं जननि दाढर्यमेतयोः
शुम्भादिदर्पविलयो ययोरभूत् ॥ १०.१७॥

राजन्तु ते कुचसुधाप्रपायिनो

लोकस्य मातरनघाः सहस्रशः ।
एतेषु कश्चन गजाननः कृती
गायन्ति यं सकलदायिसत्करम् ॥ १०.१८॥

त्वन्नाभिकूपपतितां दृशं प्रभोर्-
नेतुं विनिर्मलगुणे पुनस्तटम् ।
सौम्यत्वदीयहृदयप्रसारितः
पाशः सवित्रि तव रोमराजिका ॥ १०.१९॥

त्वन्मध्यमो गगनलोक एव चेत्
त्वद्दिव्यवैभवविदो न विस्मयः ।
प्राज्ञैर्हि सुन्दरि पुरत्रयद्विष-
स्त्वं देहिनी त्रिभुवनेन गीयसे ॥ १०.२०॥

नाभिह्रदाद्विगलितः कटीशिला-
भङ्गात् पुनः पतति किं द्विधाकृतः ।
कान्तोरुयुग्ममिषतः सवित्रि ते
भावारिपूर इभशुण्डयोः समः ॥ १०.२१॥

जङ्घायुगं तव महेशनायिके
लावण्यनिर्झरि जगद्विधायिके ।
अन्तःपरिस्फुरदगुप्तसुप्रभा-
बाणाढ्यतूणयुगलं रतीशितुः ॥ १०.२२॥

पुष्पास्त्रशासननिशान्तराज्ञि ते
लोकत्रयस्थखलकम्पनं बलम् ।
श्रोणीभरेण गमने किल श्रमं
प्राप्नोषि केन तव तत्त्वमुच्यताम् ॥ १०.२३॥

यत्रैव नित्यविहृतेरभूद्रमा
राजीवमन्दिरचरीति नामतः ।
तन्मे सदा भणतु मङ्गलं शिवा
पादाम्बुसम्भवममेयवैभवम् ॥ १०.२४॥

केशादिपादकमलान्तगायिनीः
कन्तुप्रशासननिशान्तनायिका ।
अङ्गीकरोतु ललिता इमाः कृतीर्-
गौरी कवेश्चरणकञ्जसेविनः ॥ १०.२५॥ 

%c03-q3/Ravi.Shamavedam/uma-c03-q3।txt medskip

एकादशः स्तबकः
पादादिकेशान्तवर्णनम् (आर्यावृत्तम्)

झषकेतुना प्रयुक्तः सम्मोहनचूर्णमुष्टिरीशाने ।
दरहासो धरदुहितुः करोतु भुवनं वशेऽस्माकम् ॥ ११.१॥

उपजीवद्भिः कान्तेर्लेशांस्ते जगति सुन्दरैर्भावैः ।
उपमितुमङ्गानि तव प्रायो लज्जेऽम्ब यतमानः ॥ ११.२॥

अवतंसपल्लवतुलां बिभ्राणं श्रुतिनतभ्रुवः शिरसि ।
चरणं व्रजामि शरणं वामं कामारिललनायाः ॥ ११.३॥

शङ्करनयनोन्मादनमतिमधुरं भाति मतिमता वर्ण्यें ।
जङ्घायुगं भवत्याः कुसुमपृषत्कस्य सर्वस्वम् ॥ ११.४॥

एकैकलोकने द्वयमन्योन्यस्मरणहेतुतामेति ।
देवि भवस्य तवोरुः शुण्डा च गजेन्द्रवदनस्य ॥ ११.५॥

नाकोऽवलग्नमीश्वरि कटिरवनिर्भोगिनां जगन्नाभिः ।
कुक्षौ न केवलं ते बहिरपि वपुषि त्रयो लोकाः ॥ ११.६॥

मन्ये महाकृपाणं तव वेणीमचलपुत्रि मदनस्य ।
असिधेनुकां विशङ्के निशिततराग्रां तु रोमालिम् ॥ ११.७॥

द्विरदवदनेन पीतं षड्वदनेनाथ सकलभुवनेन ।
अक्षय्यक्षीरामृतमम्बायाः कुचयुगं जयति ॥ ११.८॥

जगदम्ब लम्बमाना पार्श्वद्वितये तवागलाद्भाति ।
सान्द्रग्रथितमनोज्ञप्रसूनमालेव भुजयुगली ॥ ११.९॥

जानन्ति शक्तिमसुराः सुषमां सख्यो वदान्यतामृषयः ।
मृदुतां तवाम्ब पाणेर्वेद स देवः पुरां भेत्ता ॥ ११.१०॥

कम्बुसदृगम्ब जगतां मणिवेषोडुस्रजाकृताकल्पः ।
कण्ठोऽनघस्वरस्ते धूर्जटिदोर्नयनकर्णहितः ॥ ११.११॥

हरकान्ते वदनं ते दर्शं दर्शं वतंसशीतांशुः ।
पूर्णोऽप्यवाप कृशतां प्रायेणासूयया शुष्कः ॥ ११.१२॥

चन्द्रं रणाय सकला चपलाक्षीवदनजातिराह्वयताम् ।
तं तु महसा मुखं ते महेशकान्ते जिगायैकम् ॥ ११.१३॥

वदनकमलं तवेश्वरि कमलजयाद्दर्पितं सुधाभानुम् ।
निर्जित्य कमलजातेरमलं महदाजहार यशः ॥ ११.१४॥

लावण्यमरन्दाशा भ्रमद्भवालोकबम्भरं परितः ।
मुग्धं मुखारविन्दं जयति नगाधीशनन्दिन्याः ॥ ११.१५॥

शुद्धेन्दुसारनिर्मितमास्यार्धं ते भवानि भालमयम् ।
सकलरमणीयसारैर्निर्मितमर्धान्तरं विधिना ॥ ११.१६॥

वदनं तवाद्रिदुहितर्विजिताय नताय शीतकिरणाय ।
द्वारपपदवीं प्रददा वयमिह दरहासनामधरः ॥ ११.१७॥

ते ते वदन्तु सन्तो नयनं ताटङ्कमालयं मुकुटम् ।
कवयो वयं वदामः सितमहसं देवि ते हासम् ॥ ११.१८॥

बिम्बाधरस्य शोभामम्बायाः को नु वर्णयितुमीष्टे ।
अन्तरपि या प्रविश्य प्रमथपतेर्वितनुते रागम् ॥ ११.१९॥

गणपतये स्तनघटयोः पदकमले सप्तलोकभक्तेभ्यः ।
अधरपुटे त्रिपुरजिते दधासि पियूषमम्ब त्वम् ॥ ११.२०॥

दृक्पीयूषतटिन्यां नासासेतौ विनिर्मिते विधिना ।
भासां भवति शिवे ते मुखे विहारो निरातङ्कः ॥ ११.२१॥

कमलाविलासभवनं करुणाकेलीगृहं च कमनीये ।
हरदयिते ते विनितहिते नयने ते जननि विजयेते ॥ ११.२२॥

सर्वाण्यप्यङ्गानि श्रीमन्ति तवेन्दुचूडकुलकान्ते ।
कविनिवहविनुतिपात्रे श्रोत्रे देवि श्रियावेव ॥ ११.२३॥

अपि कुटिलमलिनमुग्धस्तव केशः पुत्रि गोत्रसुत्राम्णः ।
बिभ्रत्सुमानि कान्यपि हृदयं भुवनप्रभोर्हरति ॥ ११.२४॥

चरणादिकुन्तलान्तप्रकृष्टसौन्दर्यगायिनीरेताः ।
अङ्गीकरोतु शम्भोरम्भोजदृगात्मजस्यार्याः ॥ ११.२५॥ 275

%c03-q4/Jayanth.Ganapathiraju/transliteration.txt medskip

द्वादशः स्तबकः
शृङ्गारवर्णनम् (रथोद्धतावृत्तम्)

शर्वधैर्यगुणशातशस्त्रिका शम्बरारिजयकेतुपट्टिका ।
मन्दहासिकलिका मदापदं पर्वतेन्द्रदुहितुर्व्यपोहतु ॥ १२.१॥

मुक्तभोगिकटकेन पाणिना मुग्धगात्रि परिगृह्य ते करम् ।
एकदा शशिकिशोरशेखरः सञ्चचार रजताद्रिभूमिषु ॥ १२.२॥

तस्य तत्र परितः परिभ्रमन् वल्लभां वकुलपुष्पचुम्बिनीम् ।
पार्वति त्वदलकोपमद्युतिः चञ्चरीकतरुणो मनोऽधुनोत् ॥ १२.३॥

प्रेयसीं चपलचारुलोचनामुल्लिखन् वपुषि शृङ्गकोटिना ।
त्वद्विलोकितनिभैर्विलोकितैः धूर्जटेरमदयन्मनो मृगः ॥ १२.४॥

मञ्जुकुञ्जभवनानि मालतीपुष्परेणुसुरभिः समीरणः ।
पेशला च पिकबालकाकली मोहमीश्वरि हरस्य तेनिरे ॥ १२.५॥

अग्रतः कुसुमशोभिता लताः पार्श्वतस्त्वमगपालबालिके ।
सर्वतो मदनशिञ्जिनीध्वनिर्धीरता कथमिवास्य वर्तताम् ॥ १२.६॥

कीरकूजितसमाकुले वने शम्भुमम्ब तव पार्श्ववर्तिनम् ।
आजघान मकरध्वजश्शरैरर्दयन्त्यवसरे हि शत्रवः ॥ १२.७॥

ताडितो मकरकेतुना शरैरंसदेशमवलम्ब्य पणिना ।
एकहायनकुरङ्गलोचना त्वामिदं किल जगाद शङ्करः ॥ १२.८॥

काकलीकलकलं करोत्यसौ बालचूतमधिरुह्य कोकिला ।
वाचमुद्गिर सरोजलोचने गर्वमुन्नतमियं विमुञ्चतु ॥ १२.९॥

फुल्लकुन्दमकरन्दवाहिनो मल्लिकामुकुलधूलिधारिणः ।
कम्पयन्ति शिशवः समीरणाः पल्लवानि हृदयं च तन्वि मे ॥ १२.१०॥

वर्णनेन हृतचक्षुषः श्रियः सुप्रसन्नमधुराकृतीनि ते ।
अङ्गकानि दयिते भजेऽर्भकः स्वेदबिन्दुहरणेन वाऽनिलः ॥ १२.११॥

तावदेव मम चेतसो मुदे बर्हमेतदनघाङ्गि बर्हिणः ।
यावदक्षिपथमेष विश्लथो गाहते न कबरीभरस्तव ॥ १२.१२॥

रागवानधर एष सन्ततं निर्मलद्विजसमीपवर्त्यपि ।
एभिरस्य सहवासतः प्रिये नेषदप्यपगतो निजो गुणः ॥ १२.१३॥

चक्षुषः सुदति ते सगोत्रता कैरवैर्निशि दिने कुशेशयैः ।
कश्यपैरपि वसिष्ठबान्धवैर्भूसुपर्वण इव द्विगोत्रिणः ॥ १२.१४॥

अल्पयाऽप्यतिसमर्थया स्मितज्योत्स्नया गगनगं हरत्तमः ।
केवलं सुवचनामृतं किरच्चन्द्रबिम्बमतुषारमाननम् ॥ १२.१५॥

नित्यमब्जमुखि ते परस्परश्लिष्टमश्लथपटीकुटीरगम् ।
शर्वरीभयविवर्जितं स्थलीचक्रवाकमिथुनं कुचद्वयम् ॥ १२.१६॥

लालनीयमयि देवमौलिभिः कोमलं चरणपल्लवद्वयम् ।
कच्चिदद्रिपुरुहूतपुत्रिके न स्थली तुदति कर्कशा तव ॥ १२.१७॥

एवमादि वदति त्रिलोचने त्वन्मुखे लसति मौनमुद्रया ।
आततान जलचारिकेतनो नर्तनं नगमहेन्द्रबालिके ॥ १२.१८॥

देवि ते पुरजितावतंसितः पारिजातकुसुमस्रजा कचः ।
मानसं पुरजितोऽमुना हृतं स्मर्यते क्व मलिनात्मना कृतम् ॥ १२.१९॥

ब्रह्मचर्यनियमादचञ्चला नायिका यदि लुलायमर्दिनी ।
नायकश्च सुमबाणसूदनो वेद को रतिरहस्यमावयोः ॥ १२.२०॥

लोचनोत्सवविधौ विशारदे वारिदावरणदोषवर्जिते ।
मर्दयत्यपि नभोगतं तमः श्यामिकारहितसुन्दराकृतौ ॥ १२.२१॥

भाति शीतकिरणस्तनन्धये प्राणनायकजटाकुटीजुषि ।
शुभ्रपर्वततटे शुभाङ्गि ते सम्मदाय न बभूव का निशा ॥ १२.२२॥

सन्तु भूषणसुधांशुदीधिति व्यक्तमुग्धमुखशोभयोर्मिथः ।
तानि तानि गिरिजागिरीशयोः क्रीडितानि जगतो विभूतये ॥ १२.२३॥

मोदकादनपरस्य सृष्टये क्रीडितं जननि वां किमप्यभूत् ।
शक्तिभृत्तनयरत्नजन्मने किञ्चिदीश्वरि बभूव खेलनम् ॥ १२.२४॥

माधुरीरसपरिप्लुता इमाः काव्यकण्ठविदुषो रथोद्धताः ।
आदधत्वचलनाथनन्दिनी मानसे कमपि मोदमुत्तमम् ॥ १२.२५॥   300

॥ समाप्तं च तृतीयं शतकम् ॥

%c04-q1/Prabhanjan.Pandalaneni/umasahasramu_301-325।txt medskip

चतुर्थं शतकम्
त्रयोदशः स्तबकः
कटाक्षः (उपजातिवृत्तम्)

भवाम्बुधिं तारयताद्भवन्तं
हासोऽद्भुतः कुञ्जरवक्त्रमातुः ।
यो हन्ति बिम्बाधरलङ्घनेऽपि
व्यक्तालसत्वो हरितां तमांसि ॥ १३.१॥

सक्तः सदा चन्द्रकलाकलापे
सर्वेषु भूतेषु दयां दधानः ।
गौरीकटाक्षो रमणो मुनिर्वा
मदीयमज्ञानमपाकरोतु ॥ १३.२॥

कृपावलोको नगकन्यकायाः
करोतु मे निर्मलमन्तरङ्गम् ।
येनाङ्कितः शङ्कर एकतत्त्वं
विश्वं लुलोके जगते जगौ च ॥ १३.३॥

कालीकटाक्षो वचनानि मह्यं
ददातु मोचामदमोचनानि ।
यत्पातपूतं रघुवंशकारं
नराकृतिं प्राहुरजस्य नारीम् ॥ १३.४॥

युष्माकमग्र्यां वितनोतु वाणी-
मेणीदृगेषा गिरिशस्य योषा ।
यस्याः कटाक्षस्य विसारि वीर्यं
गिरामयं मे विविधो विलासः ॥ १३.५॥

नगात्मजायाः करुणोर्मिशाली
दृगन्तसन्तानधुनीप्रवाहः ।
भीष्मेण तप्तान्भवनामकेन
ग्रीष्मेण युष्माँच्छिशिरीकरोतु ॥ १३.६॥

अजस्रमार्द्रा दर्ययाऽन्तरङ्गे
यथा भवो निम्नगयोत्तमाङ्गे ।
सन्तापशान्तिं भवसुन्दरी मे
करोतु शीतेन विलोकितेन ॥ १३.७॥

पुण्या सदाऽपीश्वर एव सक्ता
पतिव्रतासाम्यमिता तवेक्षा ।
कुलाचलाधीश्वरकन्यके मे
संहरमंहोविततेर्विधत्ताम् ॥ १३.८॥

शर्वस्य रामे नियमेन हीना
श्यामा तवेक्षा गणिकाङ्गनेव ।
नीचेऽपि मर्त्ये निपतत्यनर्घा
बिभर्ति ना षोडश यः सुवर्णान् ॥ १३.९॥

पद्मायताक्षि क्षितिधारिकन्ये
कटाक्षनामा तव कालसर्पः ।
यं सन्दशत्येष जगत्समस्तं
विस्मृत्य चाहो न दधाति मोहम् ॥ १३.१०॥

ईशद्विषा शैलमहेन्द्रकन्ये
करोति मैत्रीं विषमायुधेन ।
प्रभाषते पातकिनश्च पक्षे

कुतः कटाक्षो न तवाम्ब मुग्धः ॥ १३.११॥

कृपान्वितः कर्णसमीपचारी
श्रीमान्सदा पुण्यजनानुकूलः ।
साम्यं कुरुणामधिपस्य शम्भोः
प्राणप्रिये ते भजते कटाक्षः ॥ १३.१२॥

कर्णान्तिकस्थोऽपि न धर्मवैरी
कृष्णोऽपि मतार्नकुलं न पाति ।
शीतोऽपि सन्दीपयति स्मराग्निं
हरस्य ते शैलसुते कटाक्षः ॥ १३.१३॥

अयं कटाक्षस्तव तोयवाहः
कारुण्यकाले परिजृम्भमाणः ।
गृहेषु लीनान् सुखिनो विहाय
निराश्रयान् सिञ्चति विश्वमातः ॥ १३.१४॥

कस्यापि वाचा वपुषा बलेन
समस्य सर्वैरपि यन्निदेशाः ।
अम्भोधिवेलास्वपि न स्खलन्ति
शम्भोः प्रियेऽयं तव दृक्प्रसादः ॥ १३.१५॥

द्वारेषु तेषां विचरन्ति शूराः
सौधेषु सारङ्गदृशस्तरुण्यः ।
प्रगल्भवाचः कवयः सभासु
शर्वाणि ते येषु कृपाकटाक्षः ॥ १३.१६॥

यत्राम्ब ते कोऽपि कटाक्षलेशः
स दुर्जयः सङ्गरसीम्नि शूरः ।
पूर्वं दिवं पूरयति द्विषद्भि-
स्ततो यशोभिर्भुवमिन्दुगौरैः ॥ १३.१७॥

यं तारकाकान्तकलापकान्ते
न लोकसे कोऽपि न लोकते तम् ।
यं लोकसे तेन विलोकितोऽपि
श्रियं समृद्धां समुपैति लोकः ॥ १३.१८॥

सुधां हसन्ती मधु चाक्षिपन्ती

यशो हरन्ती वनिताधरस्य ।
परिष्करोत्यस्य कवित्वधारा
मुखं हरप्रेयसि लोकसे यम् ॥ १३.१९॥

सर्वेन्द्रियानन्दकरी पुरन्ध्री
विद्याऽनवद्या विपुला च लक्ष्मीः ।
इयं त्रिरत्नी पुरुषस्य यस्य
दुर्गे त्वया दृष्टमिमं तु विघ्नः ॥ १३.२०॥

मुधा क्षिपस्यद्रिसुते कटाक्षान्
कैलासकान्तारमहीरुहेषु ।
इतः किरेषत्तव नास्ति हानिः
सिद्ध्यत्यभीष्टं च समस्तमस्य ॥ १३.२१॥

शीताचलाधीशकुमारि शीतः
संरक्षणे संश्रितमानवानाम् ।
दुर्धर्षदुष्टासुरमर्दनेषु
नितान्तमुष्णश्च तवावलोकः ॥ १३.२२॥

रुषा समेतं विदधाति नाशं
करोति पोषं कृपया सनाथम् ।
अम्बौषधस्येव तवेक्षितस्य
योगस्य भेदेन गुणस्य भेदः ॥ १३.२३॥

नाशाय तुल्योद्धतकामलोभ-
क्रोधत्रिदोषस्य भवामयस्य ।
शिवप्रिये वीक्षितभेषजं ते
क्रीणानि भक्त्या वद भोः कियत्या ॥ १३.२४॥

अभिष्टुतां चारणसिद्धसङ्घै-
स्त्रिष्टुब्विशेषा अपि मर्त्यसूनोः
कृपाकटाक्षैर्विनतान्पुनानां
कपर्दिनः सम्मदयन्तु कान्ताम् ॥ १३.२५॥ 325

%c04-q2/eama.krishnan.Dadibhatla/c04-q2|txt medskip

## चतुर्दशः स्तबकः

### काली गौरी कुण्डलिनी च (उपगीतिवृत्तम्)

कारणमखिलमतीनां वारणमन्तर्लसत्तमसः ।
मन्दस्मितं महेश्वरसुदृशो मे श्रेयसे भवतु ॥ १४.१॥

विश्वतनुस्तनुगात्री वज्रमयी पुष्पसुकुमारी ।
सर्वस्य शक्तिरबला काली गौर्यम्बिका जयति ॥ १४.२॥

तामाहुर्जगदंबां गौरीं केचित् परे कालीम् ।
सा गौरी महिलातनुरम्बरतनुरुच्यते काली ॥ १४.३॥

पाचकशक्तेः काल्याः केवललिङ्गेन भिद्यते कालः ।
यत्पाकतो गभीराद्भुवने सर्वेऽपि परिणामाः ॥ १४.४॥

सर्वभुवनाश्रयत्वात् काली नाम्ना दिगन्येन ।
लोके तु व्यवहरणं विदुषां दिक्कालयोर्भाक्तम् ॥ १४.५॥

दिगदितिरगाद्यखण्दा परिणमयित्री स्मृता काली ।
दक्षस्यैका दुहिता सा द्वे गुणभेदमुग्धदृशाम् ॥ १४.६॥

देहे देहे सेयं कुण्डलिनी नाम जगदम्बा ।
सा स्वपिति संसृतिमतां युञ्जानानां प्रबुद्धा स्यात् ॥ १४.७॥

मूलाधारादग्निर्ज्वलति शिरस्तः शशी द्रवति ।
कुण्डलिनीमयि मन्ये वीणाशयनात्प्रबुद्धेयम् ॥ १४.८॥

यद्द्रवति तत्र किं त्वं किं तत्र त्वमसि यज्ज्वलति ।
किमु तत्रासि महेश्वरि यदुभयमेतद्विजानाति ॥ १४.९॥

एतावग्नीषोमौ ज्वालभिश्चन्द्रिकाभिरपि ।
आवृणुतस्तनुमनयोर्व्यक्तित्वं मे पशुर्भवतु ॥ १४.१०॥

अग्निस्त्वं सोमस्त्वं त्वमधो ज्वलसि द्रवस्यूर्ध्वम् ।
अमृतमनयोः फलं त्वं तस्य च भोक्त्री चिदम्ब त्वम् ॥ १४.११॥

किन्नु सुकृतं मया कृतमखिलेश्वरि किं तपस्तप्तम् ।
क्रीडयसि मां प्रतिक्षणमानन्दसुधानिधावन्तः ॥ १४.१२॥

क्षान्तं किं मम दुरितं शान्तं किं देवि ते स्वान्तम् ।
अनुगृह्णासि विचित्रं मामप्यपराधिनां प्रथमम् ॥ १४.१३॥

काले काले सन्ध्यारूपा नोपासिता भवती ।
विच्छिन्नः स्मार्ताग्निस्त्रेता कुत एव वह्नीनाम् ॥ १४.१४॥

दातुं नार्जितमन्नं बहु देवेभ्यश्च भूतेभ्यः ।
यत्किञ्चिदार्जितं वा कलत्रपुत्रान्वितोऽश्नामि ॥ १४.१५॥

कश्चिदपि पापहारी न पुरश्चरितश्च ते मन्त्रः ।
कं गुणमभिलक्ष्य मम प्रबुद्ध्यसेऽन्तर्जगन्मातः ॥ १४.१६॥

तव मयि पृथक्तनूजप्रेमा चेत्पक्षपातोऽयम् ।
अथवा सतां निसर्गः सोऽयं त्वयि चांब सम्भाव्यः ॥ १४.१७॥

लक्ष्यं विनैव मन्त्रः किं सिद्ध्यति कोटिशोऽप्युक्तः ।
दध्मस्तद्यदि लक्ष्यं तव रूपं गलति हा मन्त्रः ॥ १४.१८॥

सङ्कल्पानां वाचामनुभूतीनां च यन्मूलम् ।
यत्र प्राणो बद्धस्तल्लक्ष्यं देवि ते रूपम् ॥ १४.१९॥॥ ३४४।

नैसर्गिकस्ववृत्तेरहङ्कृतेर्मूलमन्विष्य ।
त्वां किल साक्षात्कुरुते रमणमहर्षेरियं दृष्टिः ॥ १४.२०॥

मन्ये पर्वतकन्ये मम सेयमहङ्कृतिर्महती ।
अवतरता वर्षगणैरपि तन्मूलं न लब्धमहो ॥ १४.२१॥

एष प्रौढो भगवति बहुलं गर्जत्यहङ्कारः ।
एतस्मिन्नयि काले भवती चाबोधि कुण्डलिनी ॥ १४.२२॥

तव पश्चात्सम्भूतिं जानाति न सोऽयमद्यापि ।
प्रागिव गर्जति धीरं बिभेति मृत्योर्न नेदिष्ठात् ॥ १४.२३॥

अतिपुष्टमहङ्कारं पशुमेतं तुभ्यमर्पयते ।
प्रमथपतिप्राणेश्वरि गणपतिरेकान्तभक्तोऽयम् ॥ १४.२४॥

उपगीतयो गणपतेरुपतिष्ठन्तामिमाः प्रीत्या ।

उत्सवसहस्रलोलामुकारवाच्यस्य गृहनाथाम् ॥ १४.२५॥   350

%c04-q3/Sarada.Susarla/uma-c04-q3-itrans.txt medskip

पञ्चदशः स्तबकः
शक्तेः स्वागतम् (स्वागतावृत्तम्)

आपदामपहरन्तु ततिं नः
सम्पदामपि दिशन्तु समृद्धिम् ।
दन्तकुन्दरुचिदत्तबलानि
व्योमकेशसुदृशो हसितानि ॥ १५.१॥

अल्पमप्यधिकशक्तिसमृद्धं
मन्दमप्यधिकसूक्ष्मविसारम् ।
सुस्मितं स्मरविरोधिरमण्याः
कल्पतां मम कुलस्य शुभाय ॥ १५.२॥

पुष्कराद्रविमतो भुवमेतां
भूमितश्शशधरं क्रममाणा ।
नैव मुञ्चति पदं बत पूर्वं
नोत्तरं व्रजति नेशपुरन्ध्री ॥ १५.३॥

भूषणेष्विव सवित्रि सुवर्णं
मृत्तिकामिव घटेष्वखिलेषु ।
विश्ववस्तुषु निरस्तविशेषां
देवि पश्यति सतीं विबुधस्त्वाम् ॥ १५.४॥

किट्टभूतमखिलेश्वरजाये
दृश्यजातमखिलं निजपाके ।
प्राणबुद्धिमनसामिह वर्गः
सारभूत इति सूरिजनोक्तिः ॥ १५.५॥

सारमीश्वरि तिलेष्विव तैलं
विग्रहेषु निखिलेषु निगूढम् ।
ये धिया मथनतो विदुरेकं
ते भवन्ति विबुधास्त्वयि लीनाः ॥ १५.६॥

आयसं त्रिभुवनेश्वरि पिण्डं
वह्निनेव तपसा तनुपिण्डम् ।
यस्य चिज्ज्वलनजालमयं स्यात्
तप्तमम्ब स तवालयभूतः ॥ १५.७॥

योऽरणेर्मथनतोऽतिपवित्रं
वीतिहोत्रमिव वीतकलङ्कः ।
प्राणमुज्ज्वलयति स्वशरीरात्
त्वामसावभयदेऽर्हति यष्टुम् ॥ १५.८॥

प्राणता श्वसितमेव विचार्यं
कुर्वता करणमेव निभाल्यम् ।
गच्छता गमनमेव विशोध्यं
तत्तनौ मथनमागमबोध्यम् ॥ १५.९॥

यो रसं पिबति मूर्धसरोजात्
सोमपोऽयमनघः प्रयतात्मा ।
अग्निहोत्रमखिलेश्वरि नित्यं
मूलकुण्डदहनस्थितिरस्य ॥ १५.१०॥

चिन्मयी पिबसि सोममिमं किं
सोम एव किमसावसि मातः ।
पीयसे पिबसि च स्वयमेका
पेयपातृयुगलं किमु भूत्वा ॥ १५.११॥

तैजसं कनकमग्निवितप्तं
तेज एव कनकाङ्गि यथा स्यात् ।
मोदरूपकलया तव तप्तं
तन्मयं भवति मोदजपिण्डम् ॥ १५.१२॥

काऽपि मोदलहरी तव वीचिर्-
निर्गता दशशतारसुधाब्धेः ।
पूरयत्यखिलमम्ब शरीरं
नेह वेद्मि परमे जडभागम् ॥ १५.१३॥

सेयमुत्तमतमा निपतन्ती
शीतलाद्दशशतारपयोदात् ।

प्रेरितादखिलराज्ञि भवत्या
बुद्धिसस्यमवताद्रसवृष्टिः ॥ १५.१४॥

दुग्धसिन्धुमथनादमृतं वा
शब्दसिन्धुमथनात्प्रणवो वा ।
लभ्यते सुकृतिभिस्तव वीचिर्-
मूर्धकञ्जमथनाद्रस एषः ॥ १५.१५॥

अस्थिषु प्रवहति प्रतिवेगं
मज्जसारममृतं विदधाना ।
बिभ्रती मदमनुष्णमदोषं
मूर्धकञ्जनिलये तव धारा ॥ १५.१६॥

तैत्तिरीयकथितो रसलाभः
सोऽयमेव सकलागमवर्ण्ये
एतदेव शशिमण्डलनाथे
तन्त्रभाषितपरामृतपानम् ॥ १५.१७॥

मूर्धसोममजरामररूपे
युक्तवीक्षणकरेण निपीड्य ।
शम्भुसुन्दरि सुनोमि धिनोमि
त्वां प्रदीप्तकुलकुण्डनिशान्ताम् ॥ १५.१८॥

दृष्टिरेव रविदीधितिरुग्रा
शीर्षकञ्जशशिनं प्रविशन्ती ।
शीतलामृतमयी खलु भूत्वा
योगिनो द्रवति मोदकला ते ॥ १५.१९॥

मूर्धनि द्रवसि योगयुतानां
चक्षुषि ज्वलसि शङ्करभामे
तिष्ठसि स्थिरपदा कुलकुण्डे
बाह्यतः स्खलसि नैव कदाऽपि ॥ १५.२०॥

सा यदि द्रवति मोदकला स्यात्
सा यदि ज्वलति चित्कलिका स्यात् ।
सा परा स्थिरपदा यदि तिष्ठ-
त्यक्षरा भवति काचन सत्ता ॥ १५.२१॥

पश्यता नयनमण्डलवृत्तिं
गृह्यसे त्वमचलाधिपकन्ये ।
जानता दशशतारविलासं
स्पृश्यसे विदितमम्ब रहस्यम् ॥ १५.२२॥

व्याप्तशक्त्यसुबलेन लसन्ती
भानुबिम्बनयनेन तपन्ती ।
चन्द्रबिम्बमनसा विहरन्ती
सा पुनर्जयति मूर्ध्नि वसन्ती ॥ १५.२३॥

स्वागतं सकललोकनुतायै
स्वागतं भुवनराजमहिष्यै ।
स्वागतं मयि भृशं सदयायै
स्वागतं दशशतारमितायै ॥ १५.२४॥

सत्कविक्षितिभुजो ललिताभिः
स्वागताभिरनघाभिरिमाभिः ।
स्वागतं भणितमस्तु भवान्यै
खेलनाय शिर एतदितायै ॥ १५.२५॥ 375

%c04-q4/Kamesvararao.Tata/c04-q4।txt medskip

षोडशः स्तबकः
अध्यात्मं शक्तिवैभवम् (कुमारललितावृत्तम्)

महोविहतमोहं महेशमहिलायाः ।
स्मितं वितनुतान्मे गृहेषु महमग्र्यम् ॥ १६.१॥

इयद्बहुलगोलं जगल्लघु दधाना ।
पितामहमुखैरप्यखण्डितविधाना ॥ १६.२॥

अदुष्टचरितेभ्यः शुभान्यभिदधाना ।
कुलानि मलिनानां हतानि विदधाना ॥ १६.३॥

दुकूलमरुणांशुप्रभं परिदधाना
हरस्य रजताद्रिक्षितीशितुरधीना ॥ १६.४॥

मुनीन्द्रकृततन्त्रप्रसिद्धबहुदाना
उमा बलमलं नस्तनोत्वतुलमाना ॥ १६.५॥

निरस्तविषयां यद् दधाति मतिकीलाम् ।
समस्तजगदीशे धृतिस्तव मतेयम् ॥ १६.६॥

श्रुता प्रवणचित्तं स्मृता नरमपापम् ।
धृता हृदि विधत्से गतस्वपरभावम् ॥ १६.७॥

अहंमतितटिन्याः सतामवनिमूलम् ।
त्वमेव किल सेयं महर्षिरमणोक्तिः ॥ १६.८॥

अहंमतिलतायास्त्वयीशवधु कन्दे ।
स्थितोऽम्ब भुवनस्य प्रविन्दति रहस्यम् ॥ १६.९॥

यदेतदखिलाम्ब प्रसिद्धमिव दृश्यम् ।
तवैव किल जालं गतो भणति मूलम् ॥ १६.१०॥

प्रपश्यसि पराची जगद्द्विविधभेदम् ।
स्वतः किमपि नान्यत्प्रतीचि पुरतस्ते ॥ १६.११॥

स्तुता भवसि शश्वत् स्मृता च भजने त्वम् ।
धृता भवसि योगे तता भवसि बोधे ॥ १६.१२॥

स्तुता दिशसि कामं स्मृता हरसि पापम् ।
धृताऽस्यधिकशक्त्यै तता भवसि मुक्त्यै ॥ १६.१३॥

विशुध्यति यताशी प्रमाद्यति न शुद्धः ।
प्रमादरहितस्य स्फुटे लससि कञ्जे ॥ १६.१४॥

स्फुटं यदि सरोजं नटीव पटु नाट्यम् ।
करोषि यतबुद्धेर्जगज्जननि शीर्षे ॥ १६.१५॥

शिरोगतमिदं नः प्रफुल्लमयि पद्मम् ।
अनल्पमकरन्दं त्वमम्ब भव भृङ्गी ॥ १६.१६॥

सरोजमतुदन्ती पिबाम्ब मकरन्दम् ।

महामधुकरि त्वं भजेर्मदममन्दम् ॥ १६.१७॥

अमङ्गलमितः प्राङ् मयेशवधु भुक्तम् ।
इतः परममेये सुखान्यनुभव त्वम् ॥ १६.१८॥

अहङ्कृतिवशान्मे चिदीश्वरि पुराऽभूत् ।
तवाभवदिदानीं ममास्ति न विभुत्वम् ॥ १६.१९॥

यदाऽभवदियं मे तदाऽन्वभवदार्तिम् ।
तवेश्वरि भवन्ती भुनक्तु शमिदानीम् ॥ १६.२०॥

करोत्वियमहन्ता विवादमधुनाऽपि ।
तथाऽपि पुरतस्ते महेश्वरि विवीर्या ॥ १६.२१॥

इयं च तव बुद्धेर्यतो भवति वृत्तिः
इमामपि कुरु स्वां क्षमावति विरोषा ॥ १६.२२॥

सुधाब्धिरिह मातस्तरङ्गशतमाली ।
चिदभ्रपुरमत्र प्रभापदमदभ्रम् ॥ १६.२३॥

कुरु त्वमिदमेकं निजालयशतेषु ।
सवित्रि विहरास्मिन् यथेष्टमयि देहे ॥ १६.२४॥

कुमारललितानां कृतिर्गणपतीया ।
करोतु मुदमेषा कपर्दिदयितायाः ॥ १६.२५॥ 400

॥ समाप्तं च चतुर्थं शतकम् ॥

%c05-q1/Mohana.Rao/us-ch5-q1|TXT medskip

पञ्चमं शतकम्
सप्तदशः स्तबकः
मदकरीशक्तिः (चम्पकमालावृत्तम्)

पापविधूतौ निर्मलगङ्गा तापनिरासे चन्द्रमरीचिः ।
भर्गपुरन्ध्रीहासकला मे भद्रममिश्रं काऽपि करोतु ॥ १७.१॥

शिष्टकुलानां सम्मदयित्री दुष्टजनानां संशमयित्री ।
कष्टमपारं पादजुषो मे विष्टपराज्ञी सा विधुनोतु ॥ १७.२॥

नूतनभास्वद्बिम्बनिभाङ्घ्रिं शीतलरश्मिद्वेषिमुखाब्जाम् ।
ख्यातविभूतिं पुष्पशरारेः पूतचरित्रां योषितमीडे ॥ १७.३॥

उज्ज्वलतारे व्योम्नि लसन्ती सारसबन्धौ भाति तपन्ती ।
शीतलभासा चिन्तनकर्त्री पातु कुलं मे विष्टपभर्त्री ॥ १७.४॥

प्राणमनोवाग्व्यस्तविभूतिर्लोकविधातुः काचन भूतिः ।
पुष्करपृथ्वीपावकरूपा शुष्कमघं नः सा विदधातु ॥ १७.५॥

इष्टफलानामम्ब समृद्ध्यै कष्टफलानां तत्क्षणधूत्यै ।
चेष्टितलेशोद्दीपितशक्तिं विष्टपभर्त्रि त्वामहमीडे ॥ १७.६॥

भूमिरुहाग्रस्थापितभण्डाद्यो मधु पायं पायमजस्रम् ।
विस्मृतविश्वो नन्दति मातस्तत्र किल त्वं धाम दधासि ॥ १७.७॥

कोऽपि सहस्रैरेष मुखानां शेष इतीड्यः पन्नगराजः ।
उद्गिरतीदं यद्वदनेभ्यो देवि तनौ मे तद्वत पासि ॥ १७.८॥

साकममेये देवि भवत्या प्रातुमहन्ता यावदुदास्या ।
तावदियं तां मूर्छयतीशे पन्नगराजोद्गारजधारा ॥ १७.९॥

शाम्यतिचिन्ताजीवितमस्यामिन्द्रियसत्ताऽप्यस्तमुपैति ।
याति निरुद्धा हा गलदेशे संशयमेषा मातरहन्ता ॥ १७.१०॥

गौरि महेशप्राणसखी मां पाहि विपन्नां मातरहन्ताम् ।
सा यदि जीवेदीश्वरि तुभ्यं दासजनस्तामर्पयतेऽयम् ॥ १७.११॥

त्वत्स्मृतिवीर्याच्छान्तिसमृद्धां मातरहन्तां शुद्धतमां मे ।
आत्मभुजिष्यां कर्तुमिदानीं शांतधियस्ते कोऽस्ति विकल्पः ॥ १७.१२॥

मन्दरधारी नामृतहेतुर्वासुकिरज्जुर्नामृतहेतुः ।
मन्थनहेतुस्साऽमृतहेतुः सर्वबलात्मा शर्वपुरन्ध्री ॥ १७.१३॥

प्राणिशरीरं मन्दरशैलो मूलसरोजं कच्छपराजः ।

पूर्णमनन्तं क्षीरसमुद्रः पृष्ठगवीणा वासुकिरज्जुः ॥ १७.१४॥

दक्षिणनाडी निर्जरसेना वामगनाडी दानवसेना ।
शक्तिविलासो मन्थनकृत्यं शीर्षजधारा काऽपि सुधोक्ता ॥ १७.१५॥

कण्ठनिरुद्धे भूरिविषाग्नौ तैजसलिङ्गावासिहरेण ।
त्वद्दलजातं स्वाद्वमृत्तं को देवि निपीय प्रेत इह स्यात् ॥ १७.१६॥

येन विभुस्ते माद्यति शर्वो यत्र शिवे त्वं क्रीडसि हृष्टा ।
सम्मदमूलं तं मदमाद्ये वर्धय पुत्रेऽनुग्रहपात्रे ॥ १७.१७॥

यो मदमीदृङ्मार्गमुपेक्ष्य स्वर्विभुपूज्ये गर्वसमेतः ।
आहरति श्रीबाह्यसमृद्ध्या ना सुरया वा सोऽसुर उक्तः ॥ १७.१८॥

ताम्यति तीव्राफेननिषेवी क्लाम्यति संवित्पत्रनिषेवी ।
भ्राम्यति हालाभाण्डनिषेवी शाम्यति शीर्षद्रावनिषेवी ॥ १७.१९॥

अस्तु विरेके पथ्यमफेनं पत्रमजीर्णेष्वस्तु निषेव्यम् ।
अस्तु हितं तद्यक्ष्मणि मद्यं संसृतिहारी देवि रसस्ते ॥ १७.२०॥

नैव महान्तस्सत्त्वसमृद्धाः सर्वमदेष्वप्यम्ब चलन्तु ।
अल्पजनानां मादकवस्तुप्राशनमीशे नाशनमुक्तम् ॥ १७.४२१॥

केऽपि यजन्ते यन्मधुमांसैस्त्वां त्रिपुरारेर्जीवितनाथे ।
अत्र न यागो दूषणभागी द्रव्यससङ्गो दुष्यति यष्टा ॥ १७.२२॥

दक्षिणमार्गे सिद्ध्यति भक्तः सव्यसरण्यां सिद्ध्यति वीरः ।
नेश्वरि सव्ये नाप्यपसव्ये सिद्ध्यति दिव्ये त्वध्वनि मौनी ॥ १७.२३॥

नार्चनभारो नापि जपोऽस्यां दिव्यसरण्यां भव्यतमायाम् ।
केवलमम्बापादसरोजं निश्चलमत्या मृग्यमजस्रम् ॥ १७.२४॥

काचिदमूल्या चंपकमाला वृत्तनिबद्धा मञ्जुलमाला ।
अस्तु गणेशस्येश्वरकान्ता कण्ठविलोला चंपकमाला ॥ १७.२५॥ 425

%c05-q2/Subhadra.bala.Venuturupalli/c05-q2|txt medskip

## अष्टादशः स्तबकः
### रूपविशेषाः कुण्डलिनीसमुल्लासश्च (प्रहर्षिणीवृत्तम्)

धुन्वन्त्यस्तिमिरततिं हरित्तटीनां
धिन्वन्त्यः पुरमथनस्य लोचनानि ।
स्कन्दाम्बाहसितरुचो हरन्तु मोहं
सान्द्रं मे हृदयगतं प्रसह्य सद्यः ॥ १८.१॥

तन्वाना विनतहितं विरोधिवर्गं
धुन्वाना बुधजनमोदमादधाना ।
सम्राज्ञी त्रिदिवधरारसातलानां
रुद्राणी भणतु शिवानी मत्कुलस्य ॥ १८.२॥

योऽम्ब त्वां हृदि विदधत्तटित्प्रकाशां
पीयूषद्युतिमदहृन्मुखारविन्दाम् ।
अन्यत्तु स्मृतिपथतो धुनोति सर्वं
कामारेः सुदति नतस्य भुव्यसाध्यम् ॥ १८.३॥

कालाभ्रद्युतिमसमानवीर्यसारां
शक्त्यूर्मिभ्रमकरशुक्लघोरदंष्ट्राम् ।
यो धीरो मनसि दधाति भर्गपत्नि
त्वामस्य प्रभवति सङ्गरेषु शस्त्रम् ॥ १८.४॥

यः प्राज्ञस्तरुणदिवाकरोज्ज्वलाङ्गीं
तन्वङ्गि त्रिपुरजितो विचिन्तयेत्त्वाम् ।
तस्याज्ञां दधति शिरस्सु फुल्लजाजी-
मालां वा धरणिजुषो वशे भवन्तः ॥ १८.५॥

यो राकाशशधरकान्तिसारशुभ्रां
बिभ्राणां करकमलेन पुस्तकं त्वाम् ।
भूतेशं प्रभुमस्कृत्प्रबोधयन्तीं
ध्यायेद्वाग्भवति वशेऽस्य नाकदूती ॥ १८.६॥

जानीमो भगवति भक्तचित्तवृत्ते-
स्तुल्यं त्वं सपदि दधासि रूपमग्र्यम् ।
प्रश्नोऽयं भवति नगाधिनाथकन्ये
रूपं ते मदयति कीदृशं स्मरारिम् ॥ १८.७॥

चारु स्यादलमिति वक्तुमम्ब शक्यं
रूपं ते न वदति कोऽपि कीदृशं वा ।
सम्मोहं परमुपयान्ति कान्तिभाण्डे
कामारेरपि नयनानि यत्र दृष्टे ॥ १८.८॥

सङ्कल्पैः किमु तव भूषणान्यभूवँ-
च्छिल्पीन्द्राः किमु विदधुर्यथाऽत्र लोके ।
तत्स्वर्णं भगवति कीदृशं मणीनां
किं रूपं भवति च तत्र योजितानाम् ॥ १८.९॥

यान्यङ्गान्यखिलमनोज्ञसारभूता-
न्येतेषामपि किमु भूषणैरुमे ते ।
आहोस्विल्ललिततमानि भान्ति भूयो
भूषाभिर्विकृततमाभिरप्यमूनि ॥ १८.१०॥

मुक्ताभिर्भवति तवाम्ब किन्नु हारः
पीयूषद्युतिकरसारनिर्मलाभिः ।
मुण्डैर्वा घलघलशब्दमादधद्भिः
सङ्घर्षात् त्रिभुवनसार्वभौमभामे ॥ १८.११॥

वस्त्रं स्याद्यदि तव सर्वशास्त्रगम्ये
कार्पासं दिवि च तदुद्भवोऽनुमेयः ।
क्षौमं चेद्भगवति तस्य हेतुभूताः
कीटाः स्युर्गगनजगत्यपीति वाच्यम् ॥ १८.१२॥

रुद्रस्य प्रियदयितेऽथवा सुरद्रुर्-
भूषाणां मणिकनकप्रकल्पितानाम् ।
वस्त्राणामपि मनसे परं हितानां
कामं ते भवति समर्पकः समर्थः ॥ १८.१३॥

सुस्कन्धो बहुविटपः प्रवालशोभी
सम्फुल्लप्रसवसुगन्धवासिताशः ।
वृक्षः किं भगवति कल्पनामकोऽयं
सङ्कल्पः किमु तव कोऽपि देवि सत्यः ॥ १८.१४॥

सङ्कल्पान्न भवति कल्पपादपोऽन्यः
स्वर्दोग्ध्री पुनरितरा न कुण्डलिन्याः ।

यः कुर्याद् द्वयमिदमुद्गतात्मवीर्यं
कारुण्यात्तव भुवि चास्य नाकभाग्यम् ॥ १८.१५॥

आपीनं भवति सहस्रपत्रकञ्जं
वत्सोऽस्याः पटुतरमूलकुण्डवह्निः ।
दोग्धाऽऽत्मा दहरसरोरुहोपविष्टो
मौनं स्यात्सुरसुरभेस्तनूषु दोहः ॥ १८.१६॥

दोग्ध्र्यास्ते भगवति दोहनेन लब्धं
वत्साग्निप्रथमनिपानसद्रवायाः ।
दुग्धं स्वाद्वमृतमयं पिबन्ममात्मा
सन्तृप्तो न भवति दुर्भरोऽस्य कुक्षिः ॥ १८.१७॥

वत्सोऽग्निः पिबति दृढाङ्घ्रिरम्ब पश्चा-
दश्रान्तं पिबति दुहन् पुरोऽन्तरात्मा ।
वृद्धिं च व्रजति पयः प्रतिप्रदोहं
दोग्ध्र्यास्ते द्रव इह कुण्डलिन्यपारः ॥ १८.१८॥

सोमस्य द्रवमिममाहुरम्ब केचिद्
दुग्धाब्धेरमृतरसं गदन्ति केऽपि ।
बाष्पं केऽप्यभिदधते तु कौलकुण्डं
पीनोधस्स्रवमितरे भणन्ति धेनोः ॥ १८.१९॥

मूले त्वं ज्वलदलनप्रकाशरूपा
वीणायां प्रबलमहामदोष्मरूपा ।
शीर्षाब्जे सततगलद्रसस्वरूपा
भ्रूमध्ये भवसि लसत्तटित्स्वरूपा ॥ १८.२०॥

हार्दे चेदवतरसीह पुण्डरीके
छायावत्सकलमपि प्रपश्यसि त्वम् ।
आरूढा दशशतपत्रमद्रिपुत्रि
स्याश्चेत्त्वं भणसि जगत्सुधासमुद्रम् ॥ १८.२१॥

नेत्राभ्यां सरसिरुहच्छदायताभ्यां
वक्त्रेण प्रविमलहासभासुरेण ।
प्रत्यक्षा मम मनसः पुरः पुरन्ध्री
कामारेः परणितमस्मदीयभाग्यम् ॥ १८.२२॥

पुण्यानां परिणतिरेव भूतभर्तुः
सिद्धानां बलनिधिरेव कोऽपि गूढः ।
भक्तानां दृढतरिरेव शोकसिन्धौ
मग्नानां मम जननी महीध्रपुत्री ॥ १८.२३॥

उद्धर्तुं विनतजनं विषादगर्तात्
संस्कर्तुं भुवनहिताय योगयुक्तम् ।
संहर्तुं खलकुलमुद्धतं च दर्पाद्
भर्गस्य प्रियतरुणी सदा सदीक्षा ॥ १८.२४॥

मृद्वीकां मधुरतया सुधां महिम्ना
गाम्भीर्यात्सुरतटिनीं च निर्जयन्ती ।
शर्वाणीचरितपरा प्रहर्षिणीनां
श्रेणीयं जयतु गणेश्वरेण बद्धा ॥ १८.२५॥ 450

%c05-q3/Syam.Sunder.Vinjamuri/umAsahasram_c05-q3|txt medskip

एकोनविंशः स्तबकः
ध्येयललितारूपम् (प्रमाणिकावृत्तम्)

प्रफुल्लकल्पपादपप्रसूनसद्यशोहरम् ।
महारुजं धुनोतु ते महेशसुन्दरीस्मितम् ॥ १९.१॥

मुनीन्द्रमूलवेदिभूधनञ्जयप्रबोधनम् ।
यतीन्द्रहार्दपेटिका कवाटबन्धभेदनम् ॥ १९.२॥

यथाविधिक्रियापरद्विजातिचित्तशोधनम् ।
ममाम्बिकास्मितं भवत्वघप्रतापरोधनम् ॥ १९.३॥

सुवर्णसालभञ्जिका चरेव शोभयाऽधिका ।
अतीव मार्दवान्विता नवेव पुष्पिता लता ॥ १९.४॥

सुपर्वमौलिरत्नभा विराजिहेमपादुका ।
मरालिकानिमन्त्रकप्रशस्तरत्ननूपुरा ॥ १९.५॥

वलक्षदीधितिप्रभाविशेषहृन्नखावली ।

मुनीन्द्रशुद्धमानसप्रमेयपादसौष्ठवा ॥ १९.६॥

घनीभवत्तटित्प्रभाप्रवाहकल्पजङ्घिका ।
मतङ्गजेन्द्रनासिका मनोज्ञसक्थिशोभिनी ॥ १९.७॥

प्रसूनसायकागमप्रवादचुञ्चुकाञ्चिका ।
विशालकेशचुम्बितोल्लसन्नितम्बमण्डला ॥ १९.८॥

अजाण्डपिण्डसंहतिप्रपूर्णकुक्षिशालिनी ।
अपारदिव्यकान्तिवार्निधाननाभिदीर्घिका ॥ १९.९॥

बिसप्रसूनसायकच्छुराभरोमराजिका ।
जगत्त्रयीवसज्जनोपजीव्यदुग्धभृत्कुचा ॥ १९.१०॥

महेशकण्ठबन्धकप्रशस्तबाहुवल्लरी ।
समस्तविष्टपाभयप्रदायिपाणिपङ्कजा ॥ १९.११॥

विलोलहारमौक्तिकप्रतानसंवदत्स्मिता ।
विशुद्धसुन्दरस्मितप्रकाशभासिताम्बरा ॥ १९.१२॥

सुकोमलोष्ठकम्पनप्रभीतदुर्जयासुरा ।
सुयुक्तकुन्दकुट्मलप्रकाशदन्तपङ्क्तिका ॥ १९.१३॥

शरत्सुधांशुमण्डलप्रभाविगर्हणानना ।
सुधामरन्दवज्जपासुमोपमाधराधरा ॥ १९.१४॥

तिलप्रसूनचारुताऽपहासिभासिनासिका ।
नवीनभाभनासिकाविलम्बिदिव्यमौक्तिका ॥ १९.१५॥

विशुद्धगण्डबिम्बितस्वरूपरत्नकुण्डला ।
महामहस्तरङ्गितप्रभावशालिलोचना ॥ १९.१६॥

दलान्तरस्थयामिनीप्रभुप्रभालिकस्थली ।
मयूरबर्हगर्हणप्रकृष्टकेशभासिनी ॥ १९.१७॥

दिवाकरायुतोज्ज्वला हिमांशुलक्षशीतला ।
तटित्सहस्रभासुरा निरङ्कचन्द्रशेखरा ॥ १९.१८॥

नभोन्तरालचारिणी महाविचित्रकारिणी ।
कुलाग्निकुण्डशायिनी जगत्कथाविधायिनी ॥ १९.१९॥

नभस्तले बलेश्वरी धरातले क्रियेश्वरी ।
दिवाकरे विभेश्वरी सुधाकरे रसेश्वरी ॥ १९.२०॥

महेशवेश्मदीपिका जगत्त्रयप्रमापिका ।
अशेषशीर्षशासिनी समस्तहृन्निवासिनी ॥ १९.२१॥

गुणस्तवे गुणस्तवे गुणप्रकर्षदायिनी ।
विचिन्तने विचिन्तने विशिष्टशक्तिधायिनी ॥ १९.२२॥

भ्रमाकुलेन दुस्तरा भवालसेन दुर्गमा ।
अमन्त्रकेण दुर्भरा जगत्त्रयेण दुर्जया ॥ १९.२३॥

सुवर्णचेलधारिणी समस्तमोदकारिणी ।
विलासिनी निरामया विचिन्त्यतां मनस्त्वया ॥ १९.२४॥

पदाब्जवन्दिनः कवेरियं प्रमाणिकावली ।
महेशमानसेश्वरी गृहे महाय कल्पताम् ॥ १९.२५॥ 475

%c05-q4/Rekha.Venuturupalli/uma-c05-q4|txt medskip

विंशः स्तबकः
सर्वसारमयी (मणिबन्धवृत्तम्)

प्रीतिविकासे स्वल्पतमो रोषविशेषे भूरितरः ।
अद्भुतहासो विश्वसुवो रक्षतु साधुं हन्तु खलम् ॥ २०.१॥

सज्जनचित्तानन्दकरी संश्रितपापव्रातहरी ।
लोकसवित्री नाकचरी स्तान्मम भूयो भद्रकरी ॥ २०.२॥

अर्चनकाले रूपगता संस्तुतिकाले शब्दगता ।
चिन्तनकाले प्राणगता तत्त्वविचारे सर्वगता ॥ २०.३॥

उज्ज्वलरूपे नृत्यकरी निष्प्रभरूपे सुप्तिकरी ।

गोपितरुपे सिद्धिकरी गोचररूपे बन्धकरी ॥ २०.४॥

अम्बरदेशे शब्दवती पावकताते स्पर्शवती ।
काञ्चनवीर्ये रूपवती सागरकाञ्च्यां गन्धवती ॥ २०.५॥

अप्स्वमलासु स्पष्टरसा चन्द्रविभायां गुप्तरसा ।
संसृतिभोगे सर्वरसा पूर्णसमाधावेकरसा ॥ २०.६॥

चक्षुषि दृष्टिश्शाततमा चेतसि दृष्टिश्चित्रतमा ।
आत्मनि दृष्टिश्शुद्धतमा ब्रह्मणि दृष्टिः पूर्णतमा ॥ २०.७॥

शीर्षसरोजे सोमकला भालसरोजे शक्रकला ।
हार्दसरोजे सूर्यकला मूलसरोजे वह्निकला ॥ २०.८॥

स्थूलशरीरे कान्तिमती प्राणशरीरे शक्तिमती ।
स्वान्तशरीरे भोगवती बुद्धिशरीरे योगवती ॥ २०.९॥

सारसबन्धोरुज्ज्वलभा कैरवबन्धोः सुनदरभा ।
वैद्युतवह्नेरद्भुतभा भौमकृशानोर्दीपकभा ॥ २०.१०॥

योधवराणामायुधभा योगिवराणामीक्षणभा ।
भूमिपतीनामासनभा प्रेमवतीनामाननभा ॥ २०.११॥

शस्त्रधराणां भीकरता शास्त्रधराणां बोधकता ।
यन्त्रधराणां चालकता मन्त्रधराणां साधकता ॥ २०.१२॥

गानपटूनां रञ्जकता ध्यानपटूनां मापकता ।
नीतिपटूनां भेदकता धूतिपटूनां क्षेपकता ॥ २०.१३॥

दीधितिधारा लोकयतां जीवितधारा वर्तयताम् ।
ज्ञापकधारा चिन्तयतां मादकधारा द्रावयताम् ॥ २०.१४॥

मन्त्रपराणां वाक्यबलं योगपराणां प्राणबलम् ।
आत्मपराणां शान्तिबलं धर्मपराणां त्यागबलम् ॥ २०.१५॥

सूरिवराणां वादबलं वीरवराणां बाहुबलम् ।
मर्त्यपतीनां सैन्यबलं रागवतीनां हासबलम् ॥ २०.१६॥

वैदिकमन्त्रे भाववती तान्त्रिकमन्त्रे नादवती ।
शाबरमन्त्रे कल्पवती सन्ततमन्त्रे सारवती ॥ २०.१७॥

ब्रह्ममुखाब्जे वाग्वनिता वक्षसि विष्णोः श्रीर्ललिता ।
शम्भुशरीरे भागमिता विश्वशरीरे व्योम्नि तता ॥ २०.१८॥

भूग्रहगोलैः कन्दुकिनी विष्टपधाने कौतुकिनी ।
यावदनन्तं वैभविनी प्राणिषु भूयस्सम्भविनी ॥ २०.१९॥

कञ्जभवाण्डे मण्डलिनी प्राणिशरीरे कुण्डलिनी ।
पामरभावे सल्ललना पण्डितभावे मोदघना ॥ २०.२०॥

नार्यपि पुंसा मूलवती तन्व्यपि शक्त्या व्याप्तिमती ।
व्याप्तिमतीत्वे गुप्तिमती चित्रविचित्रा काऽपि सती ॥ २०.२१॥

दीधितिरूपा चित्तमयी प्राणशरीराऽप्यद्वितयी ।
ब्रह्मशरीरं ब्रह्मविभा ब्रह्मविभूतिर्ब्रह्मपरम् ॥ २०.२२॥

विष्टपमाता भूरिकृपा विष्टपराज्ञी भूरिबला ।
विष्टपरूपा शिष्टनुता विष्टपपारे शिष्टमिता ॥ २०.२३॥

दुर्जनमूलोच्छेदकरी दीनजनार्तिध्वंसकरी ।
धीबललक्ष्मीनाशकृशं पुण्यकुलं नः पातु शिवा ॥ २०.२४॥

चन्द्रकिरीटाम्भोजदृशः शान्तिसमृद्धं स्वान्तमिमे ।
सम्मदयन्तु श्रोत्रसुखाः सन्मणिबन्धाः सूरिपतेः ॥ २०.२५॥   500

॥ समाप्तं च पञ्चमं शतकम् ॥

Shloka hailaja Dhulipala/umasahasram_ch_06_q1|txt medskip

षष्ठं शतकम्
एकविंशः स्तबकः
अर्धनारीश्वरः (अनुष्टुब्वृत्तम्)

इतः पीत्वा कुचं स्कन्दे प्रसारितकरे ततः ।
जयति स्मितमुद्भूतं शिवयोरेकदेहयोः ॥ २१.१॥

एकतो मणिमञ्जीरक्वाणाहूतसितच्छदम् ।
अन्यतो नूपुराहीन्द्रफूत्कारकृततद्भयम् ॥ २१.२॥

गीर्वाणपृतनापालं बालं लालयदेकतः ।
उत्सङ्गे गणसम्राजमर्भकं बिभ्रदन्यतः ॥ २१.३॥

विडम्बितब्रह्मचारिकोकैकस्तनमेकतः ।
कवाटार्धनिभं बिभ्रद्वक्षः केवलमन्यतः ॥ २१.४॥

सेनान्याऽऽस्वादितस्तन्यमनुफूत्कुर्वतैकतः ।
फूत्कारमुखरं नागमुग्रं जाग्रतमन्यतः ॥ २१.५॥

एकतो दोर्लतां बिभ्रन् मृणालश्रीविडम्बिनीम् ।
शुक्रशुण्डालशुण्डाभं चण्डं दोर्दण्डमन्यतः ॥ २१.६॥

कुत्राप्यविद्यमानेऽपि वन्दनीये तदा तदा ।
परस्परकरस्पर्शलोभतो विहिताञ्जलि ॥ २१.७॥

शक्रनीलसवर्णत्वाद् भागयोरुभयोरपि ।
ऊर्ध्वाधराङ्गसापेक्षसन्धिज्ञानगलस्थलम् ॥ २१.८॥

एकतः कैरवश्रेणीनिद्रामोचनलोचनम् ।
अन्यतः कमलावासक्षणाधायकवीक्षणम् ॥ २१.९॥

एकतश्चक्षुषा चारुतारेणाधीतविभ्रमम् ।
अन्यतः पाणिपाथोजे खेलतो मृगबालतः ॥ २१.१०॥

एकतो भालफलके काश्मीरेण विशेषितम् ।
अन्यतोऽर्धेक्षणेनैव रतिभ्रूविभ्रमद्रुहाः ॥ २१.११॥

एकतः शीतलालोकं साधुलोकशिवङ्करम् ।
अन्यतः प्रज्वलत्प्रेक्षं दुष्टगोष्ठीभयङ्करम् ॥ २१.१२॥

एकतो मणिताटङ्कप्रभाधौतकपोलकम् ।
अन्यतः कुण्डलीभूतकुण्डलीभूतकुण्डलि ॥ २१.१३॥

एकतः कुन्तलान् बिभ्रदिन्द्रनीलोपमद्युतीन् ।
अन्यतः पावकज्वालापाटलांशुच्छटा जटाः ॥ २१.१४॥

एकतः केशपाशेन कीर्णेनोरसि भासुरम् ।
अन्यतो लम्बमानस्य भोगिनो हरता श्रियम् ॥ २१.१५॥

अवतंसितमम्लानपारिजातस्रजैकतः ।
विमलोल्लोलमालिन्या विभुधापगयाऽन्यतः ॥ २१.१६॥

रौप्याचलकृतावासं प्राप्यं युक्तेन चेतसा ।
वस्तु रामापुमाकारं हृदि सन्निदधातु मे ॥ २१.१७॥

कान्तार्धविग्रहे मातर्जटार्धाश्चिकुरास्तव ।
दधत्यदभ्रसन्ध्याभ्रयुक्तकालाभ्रविभ्रमम् ॥ २१.१८॥

दम्पत्योर्युवयोरेष लोपो यन्नास्ति शैलजे ।
वामं पार्श्वं विभोः शेतुं दातुं ते दक्षिणः करः ॥ २१.१९॥

लोके स्त्री स्तनयुग्मेन पुष्णात्येकं सुतं न वा ।
स्तनेनैकेन शर्वाणि पुष्णासि त्वं जगत्त्रयम् ॥ २१.२०॥

खिद्यन्ति योषितः कुक्षौ वहन्त्योऽर्भकमेककम् ।
अर्धकुक्षौ दधासि त्वं त्रिलोकीमम्ब लीलया ॥ २१.२१॥

अनुरूपा शिवस्य त्वमनुरूपः शिवस्तव ।
अलङ्कारोऽनुरूपो वामकलङ्कोऽर्भकः शशी ॥ २१.२२॥

तवैव तव देहांशो हरस्यैव हरस्य यः ।
प्राणास्तु जगतां धात्रि हरस्य त्वं हरस्तव ॥ २१.२३॥

अविभक्तं भवानि स्वं भवस्य तव चोभयोः ।
सकृत्सकरुणं चेतः सङ्कल्पयतु नश्शिवम् ॥ २१.२४॥

भवस्य भागमुत्सृज्य भवानी भागमात्मनः ।
भजत्वनुष्टुभामासां सृष्टानां नारसिंहिना ॥ २१.२५॥ 

%c06-q2/Karthik.Sitaram.Tenneti/c06-q2।txt medskip

द्वाविंशः स्तबकः
हरकुटुम्बकम् (वियोगिनीवृत्तम्)

अखिलस्य विकासकारणं व्यसनिज्ञानिजनावनेषु नः ।
वितनोतु विशेषतः शिवं शिवराजीवदृशो दरस्मितम् ॥ २२.१॥

विकले सकले सुरव्रजे व्रजति श्यामलिमानमच्युते ।
जगतस्सदयो हलाहलं चुलुकीकृत्य भयं नुनोद यः ॥ २२.२॥

निगमैस्तुरगी भुवा रथी विधिना सारथिमान् बिभेद यः ।
कनकाद्रिवरेण कार्मुकी कमलाक्षेण शरी पुरत्रयम् ॥ २२.३॥

अजितस्य च गाढमत्सरैः कमलाकान्तपुरस्सरैस्सुरैः ।
पदजायुधधारया रयाद्वधमाधत्त जलन्धरस्य यः ॥ २२.४॥

कमलासनकञ्जलोचनौ छललिङ्गस्य शिरोङ्घ्रि वीक्षितुम् ।
बत हंसवराहभूमिकौ यतमानावपि यस्य न प्रभू ॥ २२.५॥

नयनं निटलान्तरस्थितं विघटय्येषदिवान्वितो रुषा ।
भुवनत्रयनिर्जयोन्नतं मदनं गाढमदं ददाह यः ॥ २२.६॥

सकले धवलः कलेबरे हरिनीलोपलमञ्जुलः क्वचित् ।
अमृतांशुरिवादधाति यः परमामक्षिमुदं प्रपश्यताम् ॥ २२.७॥

अवतंसतुषारदीधितिद्युतिभिर्यस्य यशोभरैरपि ।
सममच्छतरीकृतो दिशामवकाशस्सुतरां प्रकाशते ॥ २२.८॥

गगनानलजीवनानिलक्षितिसोमारुणसोमयाजिभिः ।
महतो बत यस्य मूर्तिभिर्भुवनं क्रान्तमिदं समन्ततः ॥ २२.९॥

सह तेन धवेन राजते वसुधाधारिणि काऽपि राजते ।
वनिता भवतापनाशिनी चरणप्रेष्यनिवेदिताशिनी ॥ २२.१०॥

वनितापुरुषौ पुरातनौ विमले व्योमनि देवदम्पती ।
भुवनत्रितयस्य तौ विभू रजताद्राविह सिद्धदम्पती ॥ २२.११॥

गजचर्मधरः कपालभृद् गृहनाथो गृहिणी तु कालिका ।
रुधिराविलमुण्डमालिनी कथितौ तौ बत पण्डितैः शिवौ ॥ २२.१२॥

स किमिन्दुकलाशिरोमणिः किमुताश्लीलकपालभूषणः ।
किमुमे भवती कपालिनी किमु विभ्राजितरत्नमालिनी ॥ २२.१३॥

रमसेऽम्ब कपालमालिनी क्वचिदीशेन कपालमालिना ।
अतुलप्रभनिष्कमालिना क्वचिदत्युत्तमरत्नमालिनी ॥ २२.१४॥

युवयोर्मरुतस्तनूभुवो बलवन्तो भुवनप्रकम्पनाः ।
शशिदीधितिहारि यद्यशो निगमे पावनमम्ब गीयते ॥ २२.१५॥

गुरुमुत्तमभ्रचारिणामसमब्रह्मनिधाननायकम् ।
तव देवि शिवे तनूभुवां मरुतामन्यतमं प्रचक्षते ॥ २२.१६॥

द्विरदं वदने महामदं सितदन्तच्छविधौतदिक्तटम् ।
इतरत्र मुखान्नराकृतिं विदुरस्यैव विवर्तमद्भुतम् ॥ २२.१७॥

अखिलामरनिर्जयोन्नतः प्रथने तारकदानवो बली ।
हृतवीर्यमदो बभूव यद्घनशक्त्यायुधतेजसाऽञ्जसा ॥ २२.१८॥

अमले हृदि निर्मलाशनाच्छिथिले ग्रन्थिचये नराय यः ।
परिपक्वधिये प्रदर्शयेत् तमसः पारमपारवैभवः ॥ २२.१९॥

द्रविडेषु शिशुत्वमेत्य यो गिरिशश्लोकविशेषगायिनीम् ।
अमृतद्रवसारहारिणीं निगमाभां निबबन्ध संस्तुतिम् ॥ २२.२०॥

भुवि भट्टकुमारिलाख्यया भवमेत्याध्वररक्षणाय यः ।
वरजैमिनिभाषिताशयं बहुलाभिः खलु युक्तिभिर्दधौ ॥ २२.२१॥

अधुना विधुनोति यस्तमो विबुधप्रेक्षितमार्गरोधकम् ।
रमणाख्यमहर्षिवेषभृत्श्रितशोणाचलचारुकन्दरः ॥ २२.२२॥

स गुहोऽतिमहो महामहास्त्रिदशानां प्रथितश्चमूपतिः ।
जगतामधिराज्ञि कोऽपि ते सुतरां प्रीतिपदं कुमारकः ॥ २२.२३॥

जयति त्रिपुरारिभामिनी गणपत्यादिमरुत्प्रसूरुमा ।

तमसूत सुरारिधूतये त्रिदशानामपि या चमूपतिम् ॥ २२.२४॥

स्वकुटुम्बकथाभिधायिनीर्गणनाथस्य वियोगिनीरिमाः ।
अवधारयतु प्रसन्नया नगनाथप्रियनन्दिनी धिया ॥ २२.२५॥   550

%c06-q3/Mohana Rao/us-ch6-q3|TXT medskip

त्रयोविंशः स्तबकः
प्रकीर्णकम् (नरमनोरमावृत्तम्)

(अस्मिन् स्तबके तत्सवितुरिति गायत्रीमन्त्रस्य
चतुर्विंशतिवर्णाः क्रमशः पद्यानां
तृतीयपादस्य चतुर्थवर्णे दृश्यन्ते ) ।

किरदिवामृतं किरणमालया ।
जयति तत्सितं शिववधूस्मितम् ॥ २३.१॥

तव पदं परे मम गुहान्तरे ।
स्फुरतु सर्वदा विकसितं मुदा ॥ २३.२॥

पदमधोऽम्बुजान्न किल भिद्यते ।
मदनविद्विषः सदनराज्ञि ते ॥ २३.३॥

विभुतयोररीकृतबहूद्भवौ ।
विदधतुर्जगत्त्रयमिदं शिवौ ॥ २३.४॥

तव तु खेलने नलिनजाण्डकम् ।
गिरिशवल्लभे भवति कन्दुकम् ॥ २३.५॥

सकलमस्त्युमे सदभयङ्करे ।
तव करे परे किमपि नो नरे ॥ २३.६॥

किमिव वर्ण्यतां कशशिकुण्डला ।
उडुमणिस्रजाप्रविलसद्गला ॥ २३.७॥

भण निरन्तरं बहुगुणामुमाम् ।

गतभयं विधेह्यमलवाणि माम् ॥ २३.८॥

अव जहीहि वा ननु भजाम्यहम् ।
भुवनभर्त्रि ते चरणमन्वहम् ॥ २३.९॥

गणपतेः शिरःकमलचुम्बिनी ।
भवतु गोपतिध्वजकुटुम्बिनी ॥ २३.१०॥

दहरमज्जनं विदधतं जनम् ।
परमदेवते नयसि धाम ते ॥ २३.११॥

जननि विज्ञता भवतु धीमताम् ।
अनुभवस्तु ते करुणया सताम् ॥ २३.१२॥

अचलया धिया हृदि गवेषणम् ।
वृषहयप्रियानगरशोधनम् ॥ २३.१३॥

न विजहामि ते चरणनीरजम् ।
अवनि धीमतामव न वा निजम् ॥ २३.१४॥

पदमुमेऽम्ब ते हृदि विचिन्वते ।
पलितमस्तकाः परमदेवते ॥ २३.१५॥

स्वयमनामये सकलधात्र्यसि ।
निजमहिम्नि सा त्वमयि तिष्ठसि ॥ २३.१६॥

स्थितिमसादयँस्तव पदाम्बुजे ।
विधिमधिक्षिपत्यलसनीरजे ॥ २३.१७॥

स्यतु मदापदं शिववधूपदम् ।
यदृषयो विधुस्त्रिभुवनास्पदम् ॥ २३.१८॥

गुणगणं गृणँस्तव शिवे शिवम् ।
गतभयोऽभवं मदमितो नवम् ॥ २३.१९॥

तवकृपावशात् तदिदमव्यये ।
जननि नः प्लुतिस्तव यदङ्घ्रये ॥ २३.२०॥

नयनदृश्ययोरयि यदन्तरम् ।
तदमरस्तुते तव वपुः परम् ॥ २३.२१॥

अहमिति स्मृतिः क्व नु विभासते ।
इति विचोदयन् महति लीयते ॥ २३.२२॥

अमृतसंज्ञके सुखचिदात्मके ।
मतिमदर्थिते जननि धाम्नि ते ॥ २३.२३॥

अयि मुदास्पदं स्पृशति ते पदम् ।
श्वसितयात्रया सततदृष्टया ॥ २३.२४॥

दधतु सत्कवेर्गणपतेरिमाः ।
नगभुवो मुदं नरमनोरमाः ॥ २३.२५॥ 575

%c06-q4/Pattabhi Nadimpally/Arava _satakamu _chaturtha _stabakamu _576 _600txt medskip

चतुर्विंशः स्तबकः
प्रकीर्णकम् (सुप्रतिष्ठावृत्तम्)

चन्द्रिकासितं चण्डिकास्मितम् ।
भूतले सतां भातु भूतये ॥ २४.१॥

भालचक्षुषश्चक्षुषां धनम् ।
किञ्चिदस्तु मे शस्तवर्धनम् ॥ २४.२॥

साधुसन्ततिक्षेमकारिणी ।
घोरदानवानीकदारिणी ॥ २४.३॥

योगयुक्तसच्चित्तचारिणी ।
पादसेवकप्राज्ञतारिणी ॥ २४.४॥

पुष्पबाणजिन्नेत्रहारिणी ।
पातु मां जगच्चक्रधारिणी ॥ २४.५॥

द्वादशान्तभूजातशारिका ।
सर्ववाङ्मयस्यैककारिका ॥ २४.६॥

पुण्यकर्मसु स्वच्छमस्तका ।
योगशालिषु छिन्नमस्तका ॥ २४.७॥

आत्मनि स्थितेः सम्प्रदायिका ।
सर्वजन्मिनां सम्प्रवर्तिका ॥ २४.८॥

मां पुनातु सत्पूज्यपादुका ।
भाललोचनप्राणनायिका ॥ २४.९॥

दानतो यशः पौरुषाद्रमा ।
सम्पदो मदः शीलतः क्षमा ॥ २४.१०॥

सत्यतो जगत्यत्र गौरवम् ।
यज्ञतो दिवि स्थानमुज्ज्वलम् ॥ २४.११॥

संयमादघव्रातवीतता ।
योगतो महासिद्धिशालिता ॥ २४.१२॥

शर्वनारि ते पादसेवया ।
सर्वसत्फलावाप्तिरग्र्यया ॥ २४.१३॥

नोद्यमेन या सिद्धिरुत्तमा ।
विश्वनायिकावीक्षितेन सा ॥ २४.१४॥

सम्पदां रमा भारती गिराम् ।
त्वं शिवे प्रभुः प्राणसंविदाम् ॥ २४.१५॥

चक्षुषा नभोलक्ष्यधारिणा ।
सिद्ध्यतीव ते देवि धारणा ॥ २४.१६॥

आशिरो दधन्नाभितोऽनिलम् ।
देवि विन्दति त्वन्मुनिर्बलम् ॥ २४.१७॥

हृद्गृहान्तरे यद्विशोधनम् ।
तत्सवित्रि ते स्यादुपासनम् ॥ २४.१८॥

काऽप्यहम्मतिर्गोचरं विना ।
लोकधात्रि ते रूपभावना ॥ २४.१९॥

अस्यमण्डनं कोऽपि विद्यया ।
खण्डनं परः प्राह ना यया ॥ २४.२०॥

मातरेतया जीयते त्वया ।
एकया तनूभिन्नया धिया ॥ २४.२१॥

बाह्यदर्शने विश्वपङ्किला ।
अन्यथा भवस्यम्ब केवला ॥ २४.२२॥

खण्डवन्नृणां भासि भोगिनाम् ।
अस्यभिन्नचित् काऽपि योगिनाम् ॥ २४.२३॥

बन्ध एष यद्भासि खण्डिता ।
मोक्ष एष यद्भास्यखण्डिता ॥ २४.२४॥

एतदीशितुः पत्नि हृन्मुदे ।
सौप्रतिष्ठसद्गीतमस्तु ते ॥ २४.२५॥   600

॥ समाप्तं च षष्ठं शतकम् ॥

%c07-q1/Madhusudhan.Reddy/uma_c07-q1_itrans.txt medskip

सप्तमं शतकम्
पञ्चविंशः स्तबकः
क्षेत्रमाला (इन्द्रवज्रावृत्तम्)

कन्याकुमारी सुतरां वदान्या
मान्या समस्तैः प्रकृतेरनन्या ।
आक्षेपकं सागरबुद्बुदानां
हासं विधत्तां जगतः सुखाय ॥ २५.१॥

रक्ष स्वचेतो मदमत्सरादेर्-

भिक्षस्व काले तनुरक्षणाय ।
वीक्षस्व रामेशवधूपदाब्जं
मोक्षस्वलाभे यदि तेभिऽलाषः ॥ २५.२॥

लोकस्व दूरीकृतभक्तशोकं
हालास्यनाथेक्षणपुण्यपाकम् ।
भीतिः सखे चेद्भवतः पवित्रं
ज्योतिर्विशेषं जलचारिनेत्रम् ॥ २५.३॥

यो लोकते तामखिलाण्डराज्ञी-
मज्ञानविध्वंसविधानविज्ञाम् ।
अम्बां परां जीवनलिङ्गशक्तिं
भूयः स कायं न भवे लभेत ॥ २५.४॥

बिभ्रत्सहस्रं च मुखानि शक्तो
वक्तुं गुणान् कः कमलालयस्य ।
जन्मापि यत्र प्रभवेज्जनानां
मुक्त्यै मुनीनामपि दुर्लभायै ॥ २५.५॥

व्याघ्राङ्घ्रिवाताशनपूजितस्य
नाट्यस्थलीनायिकया शिवस्य ।
नेत्राध्वभाजा शिवकामया वो
मित्राणि कामाः फलिनो भवन्तु ॥ २५.६॥

आलोकतेऽपीतकुचामयि त्वा-
मालोलचित्तामरुणाचले यः ।
निर्वेदवान् पर्वसुधांशुवक्त्रे
सर्वे वशे तस्य भवन्ति कामाः ॥ २५.७॥

यः कुण्डलीपट्टणराजधानी-
मालोकते कामपि कृत्तमस्ताम् ।
निस्सारमानन्दकथाविहीनं
संसारमेतं स जहाति बुद्ध्या ॥ २५.८॥

दृष्ट्वा वधूमादिपुरीश्वरस्य
यो लोचनारोचकमाधुनोति ।
तस्यान्तरङ्गं धुतसर्वसङ्गं
भूयो भवारोचकमावृणोति ॥ २५.९॥

काञ्ची रमण्याः कुरुतां गृहस्थे
क्वाणैर्मुदं कामपि किङ्किणीनाम् ।
काञ्ची भुवः पुण्यपुरी यतीन्द्र
त्वामम्बिकानामरवैर्धिनोतु ॥ २५.१०॥

श्रीकालहस्तिस्थलदर्शनस्य
कैलासवीक्षां पुनरुक्तिमाहुः ।
ज्ञानं प्रदातुं चरणाश्रितेभ्यो
ज्ञानाम्बिका यत्र निबद्धदीक्षा ॥ २५.११॥

श्रीशैलशृङ्गस्य विलोकनेन
सङ्गेन हीनो भविता मनुष्यः ।
धामास्ति यत्र भ्रमरालकायाः
शान्तभ्रमं तद्भ्रमराम्बिकायाः ॥ २५.१२॥

तीरे विपश्चिद्वर पश्चिमाब्धेर्-
गोकर्णगां लोकय भद्रकर्णीम् ।
बुद्धिं शिवां सर्वमनोरथानां
सिद्धिं च यद्यस्ति मनोऽधिगन्तुम् ॥ २५.१३॥

धाम्नि प्रसिद्धे करवीरनाम्नि
पुण्याभिधानां कृतसन्निधानाम् ।
देवीं परां पश्यति यो विरक्तो
मुक्तेः स पाणिग्रहणाय शक्तः ॥ २५.१४॥

ज्ञाने दृढा ते यदि कापि काङ्क्षा
नानेहसं मित्र मुधा क्षिपेमम् ।
सेवस्व देवीं तुलजापुरस्थां
नैव स्वरूपादितरा किलेयम् ॥ २५.१५॥

गोपालिनीवेषभृतं भजस्व
लीलासखीं तां भुवनेश्वरस्य ।
इष्टं हृदिस्थं तव हस्तगं स्यात्
कष्टं च संसारभवं न भूयः ॥ २५.१६॥

आराध्यते वैतरणीतटस्था
येनेयमम्बा विरजोऽभिधाना ।

आराधितं तेन समस्तमन्यत्
सारो धरायामयमार्यगीतः ॥ २५.१७॥

सङ्गीयमानं स्थलमार्यबृन्दैर्-
बृन्दारकाणां सरितस्तटेऽस्ति ।
यः कालिकां पश्यति कालकेशीं
तत्रास्य कालादपि नैव भीतिः ॥ २५.१८॥

नीलाचलं सिद्धसमूहसेव्यं
लीलानिकेतं प्रवदन्ति यस्याः ।
भद्रा परा काचन गुह्यमुद्रा
कामेश्वरी सा भुवनस्य मूलम् ॥ २५.१९॥

माङ्गल्यगौरीपददर्शनस्य
कर्ता तु भूत्वा सुकृतस्य भर्ता ।
आचारपूतैरधिगम्यमग्र्यं
स्थानं प्रपद्येत यतो न पातः ॥ २५.२०॥

वाराणसी शुभ्रगिरेरनूनं
क्षेत्रं पवित्रं भुवनत्रयेऽपि ।
अर्थे प्रजानां विधृतान्नपात्रा
गौरी स्वयं यत्र विशालनेत्रा ॥ २५.२१॥

बृन्दारकाराधितपादपद्मां
नन्दामिमामिन्दुसमानवक्त्राम् ।
आलोक्य विन्ध्याचलवासिनीं ना
नालोचयेत्संसृतितो भयानि ॥ २५.२२॥

आनन्ददेहामिह मुक्तिसंज्ञां
नारीं परीरब्धुमना मनुष्यः ।
दूतीं वृणोतु प्रमथेश्वरस्य
कान्तामवन्तीपुरनायिकां ताम् ॥ २५.२३॥

यत्राचलच्छिद्रकृता सहाहं
भ्रात्रा मुहुः खेलितवान् वनेषु ।
तं सिद्धदेवर्षिनुतं स्मरामि
कैलासमावासगिरिं जनन्याः ॥ २५.२४॥

पूर्णाऽम्बरे शीतकरेऽधिकारं
बिभ्रत्यगेन्द्रे धवले सलीला ।
क्षेत्रेषु काश्यादिषु गुप्तशक्तिर्-
गौरीन्द्रवज्रासु च सन्निधत्ताम् ॥ २५.२५॥   625

%c07-q2/Jayanth.Ganapathiraju/c07-q2|txt medskip

षड्विंशः स्तबकः
अपीतकुचाम्बा (दोधकवृत्तम्)

आगमविन्मतिकैरविणीनां
बोधमजस्रमसौ विदधानः ।
पातु महेशवधूवदनांशो
हासशशी सकलानि कुलानि ॥ २६.१॥

आयतलोचनचुम्बितकर्णा
दानयशोजिततोयदकर्णा ।
शोणनगेशमनः प्रियवर्णा
नाशयताज्जगदार्तिमपर्णा ॥ २६.२॥

वेदतुरङ्गविलोचनभाग्यं
वेदशिरोनिचयैरपि मृग्यम् ।
शोकविदारिसुधाकिरणास्यं
शोणगिरौ समलोकि रहस्यम् ॥ २६.३॥

मुञ्च समस्तमनोरथलाभे
संशयमद्य करामलकाभे ।
दृक्पथमाप नगेन्द्रतनूजा
सोऽहमितः परमन्तरराजा ॥ २६.४॥

शिल्पविदः प्रतिमां प्रविशन्ती
स्वल्पविदां तरणाय चकास्ति ।
शोणधराभृति सम्प्रति लब्धा
हन्त चिरादियमेव ममाम्बा ॥ २६.५॥

भारतभूवलयेऽत्र विशाले

सन्त्वनघानि बहूनि गृहाणि ।
आस्यविगीतसुधाकरबिम्बा
शोणगिरौ रमतेऽत्र मदम्बा ॥ २६.६॥

वारितसंश्रितपातकजाला
वारिधिवीचिनिरङ्कुशलीला ।
वारिजपत्रविडम्बननेत्रा
वारणराजमुखेन सपुत्रा ॥ २६.७॥

आयतवक्रघनासितकेशी
तोयजबाणरिपोर्हृदयेशी ।
काशसुमाच्छयशाः परमैषा
पाशभिदस्तु तवेन्दुविभूषा ॥ २६.८॥

पङ्कजसम्भवपूजितपादा
पङ्कविनाशनपावननामा ।
किङ्करकल्पलता परमेयं
शङ्करनेत्रसुधा शरणं नः ॥ २६.९॥

चञ्चलदृग्विनतामरवल्ली
पञ्चपृषत्कशरासनझिल्ली ।
काञ्चनगर्भमुखप्रणुतेयं
पञ्चमुखप्रमदा शरणं नः ॥ २६.१०॥

अम्ब विधूय भटान्मदनादीन्
नूपुरनादबिभीषिकयैषः ।
हन्त जहार बलेन मनो मे
शोणनगाङ्घ्रिनिवासिनि तेऽङ्घ्रिः ॥ २६.११॥

कर्णपुटे कुरु मुग्ध ममोक्तिं
मुञ्च धनादिषु मानससक्तिम् ।
शोणगिरीन्द्रवधूपदभक्तिं
शीलय शीलय यास्यसि मुक्तिम् ॥ २६.१२॥

जीर्णतरे जरयाऽखिलदेहे
बुद्धिबलं च विलुम्पति मोहे ।
हन्त सवित्रि तपन्मतिरन्ते
सेवितुमिच्छति ना चरणं ते ॥ २६.१३॥

तन्त्रविदो नवयोनि तु चक्रं
शोणधराधररूपमुशन्ति ।
अर्धममुष्य वपुर्मदनारे-
रर्धमगेन्द्रसुते तव गात्रम् ॥ २६.१४॥

अस्तु नगेश्वरनन्दिनि लिङ्गं
तैजसमेतदिहापि तवांशः ।
वीतगुणस्य विना तव योगं
देवि शिवस्य कुतः खलु तेजः ॥ २६.१५॥

स्थापितमूर्तिरियं तव नम्या
पूजयितुं जगदीश्वरि रम्या ।
शोणनगार्धमिदं तव रूपं
कीर्तयितुं नगजे धुतपापम् ॥ २६.१६॥

शोणनगार्धतनोऽनिशमङ्के
धारयसेऽयि गुहं रमणाख्यम् ।
आगतमप्ययि हा मुहुरम्बो-
च्चाटयसे गणपं ननु कस्मात् ॥ २६.१७॥

अङ्कजुषे रमणाय नु दातुं
मानववेषधराय गुहाय ।
शोणनगार्धतनो बहु दुग्धं
मातरपीतकुचेह विभासि ॥ २६.१८॥

पूर्णसमाधिवशात् स्वपिषि त्वं
पीतमपीतकुचेऽम्ब न वेत्सि ।
अङ्कजुषा रमणेन सुतेन
प्रेक्ष्य यथेष्टमुरोरुहदुग्धम् ॥ २६.१९॥

ज्ञानरसाह्वयमम्ब निपीय
स्तन्यमसौ रमणो मुनिराट् ते ।
ज्ञानमयोऽभवदीश्वरि सर्वः
पुष्यति येन तनुं हि तदात्मा ॥ २६.२०॥

प्रीतिपदाय पयोधरकुम्भात्
पार्वति धीमयदुग्धमपीतात् ।

अस्तु गुहाय शिवे बहु दत्तं
किञ्चिदिवेश्वरि धारय मह्यम् ॥ २६.२१॥

प्रौढमिमं यदि वेत्सि तनूजं
शैलसुते मदवारि दधानम् ।
मास्तुपयो वितरानघमन्नं
येन दधानि महेश्वरि शक्तिम् ॥ २६.२२॥

स्वार्जितमेव मया यदि भोज्यं
सम्मद एव ममाखिलमातः ।
आशिषमग्र्यतमामयि दत्त्वा
प्रेषय यानि जयानि धरित्रीम् ॥ २६.२३॥

विद्युति विद्युति वीक्ष्यविलासा
वीक्षितकर्मणि लक्ष्यरहस्या ।
पार्वणचन्द्रमुखी ललिताङ्गी
तैजसलिङ्गसखी शरणं नः ॥ २६.२४॥

मातरपीतकुचेऽरुणशैला-
धीश्वरभामिनि भामहनीये ।
साधु विधाय समर्पयते ते
दोधकमाल्यमिदं गणनाथः ॥ २६.२५॥ 650

%c07-q3/Sarada.Susarla/uma-c07-q3-itrans.txt medskip

सप्तविंशः स्तबकः
प्रचण्डचण्डी (शिखरिणीवृत्तम्)

विधुन्वन्ध्वान्तानि प्रतिदिशमधर्मं परिहरँ-
च्छ्रियं व्यातन्वानस्सपदि शमयन् दुःखपटलम् ।
सहस्राराम्भोजे द्रवमसदृशं मे प्रजनयन्
प्रचण्डायाश्चण्ड्यास्स्मितहसितलेशो विजयते ॥ २७.१॥

अरीणां शीर्षेषु ज्वलितदवकीलीन्द्रसदृशं
विनम्राणां शीर्षेष्वमृतकरबिम्बेन तुलितम् ।
विरोधिध्वान्तानां तरुणतरणिप्राभवहरं

प्रचण्डायाश्चण्ड्याश्चरणमसतां हन्तु विभवम् ॥ २७.२॥

भजे भासां शालां निखिलधिषणानां जनिभुवं
बलानामाधात्रीं निखिलभुवनेन्द्रस्य दयिताम् ।
भजन्ते यां गीतैर्मधुसमयमाद्यात्पिकवधू-
कलालापा हृद्यैर्हयवदनपङ्केरुहदृशः ॥ २७.३॥

ज्वलन्ती तेजोभिर्महिषमथने या तव तनुर्-
लसन्ती लावण्यैर्गिरिशरमणे या तव तनुः ।
विना क्रोधप्रीति न किमपि तयोर्भेदकमभूत्
तयोराद्या दुर्गा भवति ललिताऽन्या मुनिनुते ॥ २७.४॥

सहस्रं भानूनां भवति दिवासानामधिपतेः
सहस्रं शीर्षाणां भवति भुजगानामधिपतेः ।
सहस्रं नेत्राणां भवति विबुधानामधिपतेः
सहस्रं बाहूनां भवति समये हैमवति ते ॥ २७.५॥

प्रसन्नो वक्त्रेन्दुर्न च नयनयोः कोऽप्यरुणिमा
न कम्पो बिम्बोष्ठे स्मितमपि लसत्काशविशदम् ।
सरोजाभः पाणिः किणविरहितः कोमलतमो
ज्वलच्छूलं त्वासीज्जननि ताव शुम्भाय भयदम् ॥ २७.६॥

वधे शुम्भस्यासीत्तव जननि या काचन तनुर्-
दधानाऽग्र्याः शक्तीः शशिकिरणसारोपमरुचिः ।
इमां ध्यायं ध्यायं स्मरहरसखि व्याकुलमिदं
मनो मे विश्रान्तिं भजति भजतां कल्पलतिके ॥ २७.७॥

यदि त्वं संहारे पटुरसि सवित्रि त्रिजगत-
स्तदेतत्त्वां याचे सरसिरुहगर्भादिविनुते ।
इमे मे पाप्मानो भगवति नदन्तो बहुविधा-
स्तदेषु प्रख्यातं प्रतिभयतमं दर्शय बलम् ॥ २७.८॥

बिभेदोरः क्रोधात्कनककशिपोरब्धितनया-
कुचग्रावोल्लीढैरतिशितशिखैर्यैः किल नखैः ।
त्वया दत्ता शक्तिर्नरहरिशरीराय जगतां
विनेत्रे पुंसेऽस्मै जननि रणरङ्गस्थलरमे ॥ २७.९॥

अजेयस्त्रैलोक्यप्रकटितपताकः पलभुजां

बिडौजा यत्कारागृहपरिचयी पङ्क्तिवदनः ।
सहस्रारं साक्षाद्भुतनरशरीरं तमजयत्
तवैवावेशेन प्रियपरशुरम्ब द्विजशिशुः ॥ २७.१०॥

त्वदीया सा शक्तिस्ककलजगदन्तेऽप्यनलसा
पुरा कार्यस्यान्ते तनयमयि हित्वा नृपरिपुम् ।
अविक्षत्काकुत्स्थं दशमुखकुलोन्माथविधये
सहस्रांशुं हित्वा शशिनमिव घस्रे गलति भा ॥ २७.११॥

हृते लोकव्राते भगवति भवत्यैव स पुरा-
मरिः कीर्तिं लब्धुं चतुरमतिरायाति समये ।
त्वया लोकत्राणे जननि रचिते राक्षसबधाद्
यशोऽवाप्तुं विष्णुर्मिलति च कुतोऽप्येष निपुणः ॥ २७.१२॥

स्वरूपं ते वज्रं वियति रजसां सूक्ष्ममहसा-
मुपाधिस्ते स्तोमो भवति चपला काऽपि तनुभा ।
अरुद्धा ते व्याप्तिर्बलमखिलदत्तं बलनिधेः
सहस्रांशः स्वस्य प्रभवसि समस्तस्य च शिवे ॥ २७.१३॥

यतः कालव्याजात्पचसि भुवनं वैद्युतमहः-
प्रभावात्कालीं त्वामयि विदुरतः पण्डितवराः ।
प्रभोः शस्त्रं भूत्वा दहसि यदरीन्वज्रवपुषा
प्रचण्डां चण्डीं तद्भगवति भणन्त्यक्षयबले ॥ २७.१४॥

अयि त्वामेवेन्द्रं कथयति मुनिः कश्चिदजरे
त्वया शस्त्राढ्यं तं भणति तु परस्तत्त्वविदृषिः ।
युवां मातापुत्रौ भगवति विभाज्यौ न भवतस्-
ततो धीनां द्वेधा विबुधजनगोष्ठीषु गतयः ॥ २७.१५॥

विकुर्वाणा विश्वं विविधगुणभेदैः परिणमद्
विधुन्वाना भावान् भुवनगतिरोधाय भवतः ।
वितन्वाना शर्वं चलवदचलं काचिदवितुं
विचिन्वाना जन्तोः कृतलवमपीशा विजयते ॥ २७.१६॥

प्रभा भानोर्यद्वद्भवसि सकलस्यापि तपनी
प्रचण्डा शक्तिः सत्यखिलभुवनेशस्य तपतः ।
सुधांशोर्ज्योत्स्नेव प्रमदयसि चेतः प्रविशतो
भवन्ती भूतादेर्दहरकुहरं मोदलहरी ॥ २७.१७॥

प्रचण्डा गौरी वा त्वमसि वसुरुद्रार्कविनुते
स भीमः शम्भुर्वा विभुरभयदः पादसुहृदाम् ।
तयोरेकं रूपं तव सहविभोः खेलति मह-
त्यमुष्मिन्नाकाशे धवलमहसि क्रीडति परम् ॥ २७.१८॥

विभक्ता या द्वेधा त्वमसि गगने शीतमहस-
स्तथा रम्ये बिम्बे ज्वलितललितस्त्रीतनुविधा ।
तयोर्ब्रूहीशाने जननि कतमा मे जननभूः
पुराजन्मन्यासीद्विकटमथवोग्रैव सुषुवे ॥ २७.१९॥

दृशोर्भेदाद् दृष्टेर्न भवति भिदा काऽपि करयोर्-
न भेदाद्भिन्नं स्यात्कृतमभिविमानैक्यवशतः ।
भिदा तन्वोरेवं न भवति भिदायै तव शिवे
वियद्देशे चण्ड्यां सितमहसि गौर्यां च भवति ॥ २७.२०॥

तव च्छिन्नं शीर्षं विदुरखिलधात्र्यागमविदो
मनुष्याणां मस्ते बहुलतपसा यद्विदलिते ।
सुषुम्नायां नाड्यां तनुकरणसम्पर्करहिता
बहिश्शक्त्या युक्ता विगतचिरनिद्रा विलससि ॥ २७.२१॥

उताहो तन्वङ्ग्यां भृगुकुलविधात्र्यां पितृगिरा
तनूजेनच्छिन्ने शिरसि भयलोलाक्षि नलिने ।
न्यधास्तेजो भीमं निजमयि यदक्षुद्रमनघं
तदाहुस्त्वामम्ब प्रथितचरिते कृत्तशिरसम् ॥ २७.२२॥

हुतं धाराज्वालाजटिलचटुले शस्त्रदहने
तपस्विन्याः कायं भगवति यदाऽम्ब त्वमविशः ।
तदा तस्याः कण्ठप्रगलदसृजः कृत्तशिरसः
कबन्धेन प्राप्तो भुवनविनुतः कोऽपि महिमा ॥ २७.२३॥

निधेस्त्वत्तो हृत्वा भगवति न लज्जे भुवि सृजन्
रसक्षोणीर्वाणीस्त्वदमलयशस्सौरभजुषः ।
नृपोद्यानात्सूनोत्करमपहरन् भक्तिनटनं
वितन्वानस्तस्मै मुहुरुपहरँत्सेवक इव ॥ २७.२४॥

दधानास्सन्तोषं मनसि सुकवीनामतितरां
ददानाः प्रत्यग्रं विबुधसदसे भावमलघुम् ।

कुलानामुत्साहं सपदि विदधानाश्शिववधू-
पराणां शोभन्तां जगति शिखरिण्यो गणपतेः ॥ २७.२५॥   675

%c07-q4/Padmaja Pandalaneni/umasahasramu_676-700।txt medskip

अष्टाविंशः स्तबकः
रेणुकादिवर्णनम् (वसन्ततिलकावृत्तम्)

अन्तर्वलक्षपरिधिभ्रममादधानो
वक्त्रस्य पूर्णतुहिनद्युतिमण्डलस्य ।
हासः करोतु भवतां परमं प्रमोदं
शुद्धान्तपङ्कजदृशः प्रमथेश्वरस्य ॥ २८.१॥

सम्मोहनानि तुहिनांशुकलाधरस्य
सञ्जीवनानि सरसीरुहसायकस्य ।
सन्दीपनानि विनतेषु जनेषु शक्तेः
संहर्षणानि मम सन्तु शिवास्मितानि ॥ २८.२॥

पापानि मे हरतु काचन कृत्तशीर्षा
माता पदाम्बुजभुजिष्यवितीर्णहर्षा ।
या भक्तलोकवरदानविधौ विनिद्रा
वासं कमण्डलुधुनीपुलिने करोति ॥ २८.३॥

षष्ठावतारजननावनिरेकवीरा
भीमा धुनोतु दुरितानि गणाधिपस्य ।
या भक्तरक्षणविधावतिजागरूका
पुण्ये कमण्डलुधुनीपुलिने चकास्ति ॥ २८.४॥

छेदाय चेद् गतरजा मुनिरादिदेश
चिच्छेद चेद्बहुगुणस्तनयः सवित्रीम् ।
दाह्यं शरीरमखिलप्रभुरीशशक्तिः
यद्याविवेश च कथा परमाद्भुतेयम् ॥ २८.५॥

पुत्रः प्रियस्तव शिरः सहसा चकर्त
कृत्ता च हर्षभरिता भवती ननर्त ।
नो तस्य पापमपि नो तव काऽपि हानिः

नाशोऽस्य हा भुजभुवामभवद्विपाकः ॥ २८.६॥

अम्बैव सा सुरभिर्जुनभूपतिर्यां
वीर्याज्जहार स च भार्गव आजहार ।
तस्या हतेः परगृहस्थितिरेव हेतुः
गन्धर्वदर्शनकथा रिपुकल्पितैव ॥ २८.७॥

छिन्नानि नो कति शरीरभृतां शिरांसि
तत्पूज्यते जगति रैणुकमेव शीर्षम् ।
कृत्ताः कलेवरवतां कति नाभयो न
चेतो धिनोति सुरभिर्मृगनाभिरेकः ॥ २८.८॥

प्राणा वसन्ति शिरसा रहिते शरीरे
लीलासरोजति शिरस्तु करेऽस्य कृत्तम् ।
तन्निघ्नमेतदखिलं च धियैव धीराः
पश्यन्तु नन्दनगरे तदिदं विचित्रम् ॥ २८.९॥

प्राणेश्वरी विधिपुरे लसतः पुरारे-
रङ्गीकरोतु शरणागतिमम्बिका मे ।
लब्धं निपीय यदुरोरुहकुम्भदुग्धं
सम्बन्धमूर्तिरभवत्कविचक्रवर्ती ॥ २८.१०॥

अप्राप्य लोकरचनावनपातनेषु
यस्यास्त्रयोऽपि पुरुषाः करुणाकटाक्षम् ।
नैवेशते किमपि सा जगदेकमाता
भद्रा परा प्रकृतिरस्त्वघनाशिनी नः ॥ २८.११॥

राका प्रबोधशशिनो हृदयोदयस्य
नौका विपज्जलनिधौ पततां जनानाम् ।
वेदध्वजस्य ललिता त्रिरुचिः पताका
काचिन्ममास्तु शरणं शिवमूलटीका ॥ २८.१२॥

मौलौ महेन्द्रसुदृशस्सुमनोनिकाय-
संशोभिते सदसि मान्य इवाभिजातः ।
रेणुश्च यच्चरणभूर्लभतेऽग्रपीठं
त्राणाय सा भवतु भूतपतेर्वधूर्नः ॥ २८.१३॥

अम्बावृणोति परितोऽप्ययमन्धकारो

नात्मानमेव मम किं तु कुलं च देशम् ।
शीघ्रं मदीयहृदयोदयपर्वताग्रे
श्रीमानुदेतु तव पादमयूखमाली ॥ २८.१४॥

कष्टं धुनोतु मम पर्वतपुत्रिकायाः
प्रत्यग्रपङ्करुहबान्धवकान्तिकान्तम् ।
अम्भोरुहासनमुखामरमौलिरत्न-
ज्योतिर्विशेषितगुणं चरणारविन्दम् ॥ २८.१५॥

ज्याशिञ्जितानि समरे गिरिशं जिगीषोः
कामस्य हंसनिवहस्य निमन्त्रणानि ।
धुन्वन्तु मे विपदमद्रिकुमारिकायाः
पादारविन्दकटकक्वणितानि तानि ॥ २८.१६॥

यः सर्वलोकमथनं महिषं जिगाय
यस्यैव कर्म दमनं च तदन्तकस्य ।
नारीनराकृतिभृतो महसस्तमङ्घ्रिं
मञ्जीरनादमधुरं शरणं व्रजामि ॥ २८.१७॥

आपन्महोग्रविषराशिनिमग्नमेतं
दीनं त्वदीयचरणं शरणं प्रपन्नम् ।
उद्धर्तुमम्ब करुणापरिपूर्णचित्ते
वित्तेशमित्रकुलनारि तवैव भारः ॥ २८.१८॥

लोकाधिराज्ञि पतितं विपदन्धकूपे
संरुद्धदृष्टिमभितस्तिमिरच्छटाभिः ।
मातः समुद्धर कृपाकलिते मृडानि
पुत्रं करेण जगतामभयङ्करेण ॥ २८.१९॥

अस्य त्वदीयपदपङ्कजकिङ्करस्य
दुर्भाग्यपाकविफलीकृतपौरुषस्य ।
प्राणेश्वरि प्रमथलोकपतेरुपायं
वीक्षस्व तारणविधौ निपुणे त्वमेव ॥ २८.२०॥

मृत्युञ्जयोरुमणिपीठतटे निषण्णे
ताटङ्ककान्तिबहुलीकृतगण्डशोभे ।
माणिक्यकङ्कणलसत्करवारिजाते
जाते कुलाचलपतेर्जहि पातकं नः ॥ २८.२१॥

किं ते वपुर्जननि तप्तसुवर्णगौरं
कामारिमोहिनि किमिन्दुकलावलक्षम् ।
पाकारिनीलमणिमेचककान्त्युताहो
बन्धूकपुष्पकलिकारुचि वा स्मरामि ॥ २८.२२॥

त्वं सुन्दरी नृपतिजातिजितस्त्वमम्बा
धूमावती त्वमजरे भुवनेश्वरी त्वम् ।
काली त्वमीश्वरि शुकार्भकधारिणी त्वं
तारा त्वमाश्रितविपद्दलनासिधारा ॥ २८.२३॥

त्वं भैरवी भगवती बगलामुखी त्वं
रामा च सा कमलकाननचारिणी त्वम् ।
कैलासवासिनयनामृतभानुरेखे
को वेद ते जननि जन्मवतां विभूतीः ॥ २८.२४॥

धुन्वन्तु सर्वविपदः सुकृतप्रियाणां
धुन्वन्तु चाखिलसुखान्यघलालसानाम् ।
आवर्ज्य भूरिकरुणं पुरजित्तरुण्या-
श्चित्तं वसन्ततिलकाः कविभर्तुरेताः ॥ २८.२५॥   700

॥ समाप्तं च सप्तमं शतकम् ॥

%c08-q1/Sesha.talpasAyi.Vadapalli/c08_q1_itrans.txt medskip

अष्टमं शतकम्
एकोनत्रिंशः स्तबकः
नवविधभजनम् (मदलेखावृत्तम्)

आयुष्या भुवनानां चक्षुष्यास्त्रिपुरारेः ।
कुर्वन्तु प्रमदं नः पार्वत्याः स्मितलेशाः ॥ २९.१॥

नात्यर्घाणि निरर्थं नेतव्यानि दिनानि ।
अम्बायाश्चरितानि श्रोतव्यान्यनघानि ॥ २९.२॥

उद्योगं कुरु जिह्वे संहर्तुं दुरितानि ।

पूतान्यद्रिसुतायाः कीर्त्यन्तां चरितानि ॥ २९.३॥

श्रीसक्तिर्विनिवार्या चिन्ता काऽपि न कार्या ।
नित्यं चेतसि धार्या दीनानां गतिरार्या ॥ २९.४॥

ज्ञातुं या गदितुं या श्रोतुं या श्वसितुं या ।
द्रष्टुं याऽन्तरशक्तिस्तिष्ठात्र स्मृतिरेषा ॥ २९.५॥

विभ्राजीनशताभं बिभ्राणं शिरसीन्दुम् ।
स्मर्तव्यं जगदम्बारूपं वा धुतपापम् ॥ २९.६॥

येषां स्यात्परितप्तं प्रायश्चित्तमघेन ।
रुद्राणीपदसेवा प्रायश्चित्तममीषाम् ॥ २९.७॥

तद्दीप्तं पदयुग्मं सेवे यत्र भवन्ति ।
अङ्गुल्यो दश भानोर्भानूनां शतकानि ॥ २९.८॥

नो चेत् कुप्यसि किञ्चिद् याचे वाचमतीते ।
सेवां मातरुरीकुर्विष्टं मे कुरु मा वा ॥ २९.९॥

शर्वाणीचरणार्चापीठं पीवरकाणाम् ।
वध्यस्थानमिदं स्यादुग्राणां दुरितानाम् ॥ २९.१०॥

स्कन्दाम्बापदपीठस्पृष्टं चेद्दलमाप्तम् ।
एकैकं सुममंहस्वेकैकं कुलिशं स्यात् ॥ २९.११॥

अम्भोजोपममङ्घ्रिं शम्भोः पट्टमहिष्याः ।
अंहस्संहतिमुग्रां संहर्तुं प्रणमामः ॥ २९.१२॥

ये कालीपदवेषं नालीकं प्रणमन्ति ।
नैषां किञ्चिदशक्यं नालीकं मम वाक्यम् ॥ २९.१३॥

वासस्तेऽत्र समाप्तः पङ्केतो व्रज दूरम् ।
कालीं शङ्करनारीं कालेऽस्मिन् प्रणमामः ॥ २९.१४॥

आशा रे तदवस्था भूभागनटतस्ते ।
कामानां क्व नु पारः कामारेर्नम नारीम् ॥ २९.१५॥

धन्यास्ते तुहिनाद्रेः कन्यां ये प्रणमन्ति ।
अन्यानुन्नतशीर्षान् मन्ये वन्यलुलायान् ॥ २९.१६॥

पादाम्भोजमुमायाः प्राज्ञास्सम्प्रणमन्तः ।
गृह्णन्ति श्रियमस्मिन् राजन्तीं निजशक्त्या ॥ २९.१७॥

मन्दाराद्रिसुताङ्घ्री दातारौ सदृशौ स्तः ।
उत्कण्ठैः फलमाद्यादन्यस्मान्नतकण्ठैः ॥ २९.१८॥

कालस्यापि विजेतुः शर्वाण्याश्चरणस्य ।
एषोऽहं कविलोकक्ष्मापालोऽस्मि भुजिष्यः ॥ २९.१९॥

रक्ते दर्शय रागः रुद्राणीपदपद्मे ।
चेतः पुष्यति शोभां सारस्सारवतोऽग्रे ॥ २९.२०॥

संशोध्यागमजालं सारांशं प्रवदामः ।
स्कन्दाम्बापदभक्तिर्भुक्त्यै चाथ विमुक्त्यै ॥ २९.२१॥

वात्सल्यं गतिहीनेष्वायुष्यं सुकृतस्य ।
भूयोभिः सह सख्यं श्रीहेतुष्विह मुख्यम् ॥ २९.२२॥

श्लाघ्यं पुष्यति कामं प्रेमा स्वप्रमदायाम् ।
शर्वाणीपदभक्तिर्नित्याय प्रमदाय ॥ २९.२३॥

एकैवं बहुभेदा भिन्नत्वाद्विषयाणाम् ।
रत्याख्या द्रुतिरन्तः सा सूते फलभेदान् ॥ २९.२४॥

हर्षं कञ्चन मातुर्मत्तो भक्तिभरेण ।
तन्वन्नेष विधत्तां हेरम्बो मदलेखाः ॥ २९.२५॥   725

%c08-
q2/Pattabhi.Nadimpally/enimidava_satakamu_dvitiya_stabakamu_726_750।
txt medskip

त्रिंशः स्तबकः
मानसपूजा (प्रमाणिकावृत्तम्)

कृतेन सा निसर्गतो धृतेन नित्यमानने ।
सितेन शीतशैलजा स्मितेन शं तनोतु मे ॥ ३०.१॥

प्रतिक्षणं विनश्वरानये विसृज्य गोचरान् ।
समर्चयेश्वरीं मनो विविच्य विश्वशायिनीम् ॥ ३०.२॥

विशुद्धदर्पणेन वा विधारिते हृदाऽम्ब मे ।
अयि प्रयच्छ सन्निधिं निजे वपुष्यगात्मजे ॥ ३०.३॥

पुरस्य मध्यमाश्रितं सितं यदस्ति पङ्कजम् ।
अजाण्डमूल्यमस्तु ते सुरार्चिते तदासनम् ॥ ३०.४॥

अखण्डधारया द्रवन्नवेन्दुशेखरप्रिये ।
मदीयभक्तिजीवनं दधातु तेऽम्ब पाद्यताम् ॥ ३०.५॥

विवासनौघमानसप्रसादतोयमम्ब मे ।
समस्तराज्ञि हस्तयोरनर्घमर्घ्यमस्तु ते ॥ ३०.६॥

महेन्द्रयोनिचिन्तनाद् भवन्भवस्य वल्लभे ।
महारसो रसस्त्वया निपीयतां विशुद्धये ॥ ३०.७॥

सहस्रपत्रपङ्कजद्रवत्सुधाजलेन सा ।
सहस्रपत्रलोचना पिनाकिनोऽभिषिच्यते ॥ ३०.८॥

ममार्जितं यदिन्द्रियैः सुखं सुगात्रि पञ्चभिः ।
तदम्ब तुभ्यमर्पितं सुधाख्यपञ्चकायताम् ॥ ३०.९॥

वसिष्ठगोत्रजन्मना द्विजेन निर्मितं शिवे ।
इदं शरीरमेव मे तवास्तु दिव्यमंशुकम् ॥ ३०.१०॥

विचित्रसूक्ष्मतन्तुभृन्ममेयमात्मनाडिका ।
सुखप्रबोधविग्रहे मखोपवीतमस्तु ते ॥ ३०.११॥

महद्विचिन्वतो मम स्वकीयतत्त्ववित्तिजम् ।
इदं तु चित्तसौरभं शिवे तवास्तु चन्दनम् ॥ ३०.१२॥

महेशनारिनिःश्वसँस्तथाऽयमुच्छ्वसँस्तदा ।

तवानिशं समर्चको ममास्तु जीवमारुतः ॥ ३०.१३॥

विपाककालपावकप्रदीप्तपुण्यगुग्गुलुः ।
सुवासनाक्यधूपभृद् भवत्वयं ममाम्ब ते ॥ ३०.१४॥

गुहावतारमौनिना मयीश्वरि प्रदीपिता ।
इयं प्रबोधदीपिका प्रमोददायिकाऽस्तु ते ॥ ३०.१५॥

इमामयि प्रियात्प्रियां महारसामहङ्कृतिम् ।
निवेदयामि भुज्यतामियं त्वया निरामये ॥ ३०.१६॥

सरस्वती सुधायते मनो दधाति पूगताम् ।
हृदेव पत्रमम्बिके त्रयं समेत्य तेऽर्प्यते ॥ ३०.१७॥

विनीलतोयदान्तरे विराजमानविग्रहा ।
निजाविभूतिरस्तु ते तटिल्लता प्रकाशिका ॥ ३०.१८॥

स्वरोऽयमन्तरम्बिके द्विरेफवत्स्वरँस्तदा ।
ममाभिमन्त्र्य धीसुमं ददाति देवि तेऽङ्घ्रये ॥ ३०.१९॥

तवार्चनं निरन्तरं यतो विधातुमस्म्यहम् ।
न विश्वनाथपत्नि ते विसर्जनं विधीयते ॥ ३०.२०॥

वियोग इन्दुधारिणा न चेह विश्वनायिके ।
मदम्ब सोऽत्र राजते तटिल्लताशिखान्तरे ॥ ३०.२१॥

इदं शरीरमेककं विभाव्य नव्यमन्दिरम् ।
विहारमत्र सेश्वरा भवानि कर्तुमर्हसि ॥ ३०.२२॥

जडेष्विवालसेष्विव प्रयोजनं न निद्रया ।
विहर्तुमेव याच्यसे हृदीशसद्मराज्ञि मे ॥ ३०.२३॥

अयं तवाग्रिमः सुतः श्रितो मनुष्यविग्रहम् ।
तनूजवेश्मसौष्ठवं मृडानि पश्य कीदृशम् ॥ ३०.२४॥

गणेशितुर्महाकवेरसौ प्रमाणिकावली ।
मनोम्बुजे महेश्वरीप्रपूजनेषु शब्द्यताम् ॥ ३०.२५॥

%c08-q3/Sesha.talpasAyi.Vadapalli/c08_q3_itrans.txt medskip

एकत्रिंशः स्तबकः
नामवैभवम् (उपजातिवृत्तम्)

दरस्मितश्रीकपटा सुपर्व-
स्रोतस्विनी पर्वतजास्यजाता ।
पङ्कं मम क्षालयतादशेषं
संसारमग्ने हृदये विलग्नम् ॥ ३१.१॥

हराट्टहासेन समं मिलित्वा
पित्रेव पुत्रो गुरुणेव शिष्यः ।
विभ्राजमानो मम शं करोतु
हासाङ्कुरः केसरिवाहनायाः ॥ ३१.२॥

नमश्शिवायै भणत द्विपादो
युष्माकमग्र्यां धिषणां दधत्यै ।
आधारचक्रेशितुरम्बिकायै
ब्रह्माण्डचक्रस्य विधायिकायै ॥ ३१.३॥

नदन्ति गावोऽपि विशिष्टकाले-
ष्वम्बेति यो नाह्वयते स किं ना ।
लक्ष्यं पुनः प्राणवदस्तु सर्वं
सर्वस्य चान्तर्हि पराऽस्ति शक्तिः ॥ ३१.४॥

आत्मन्युतान्यत्र विधाय लक्ष्यं
तां शक्तिमाद्यामखिलेषु सुप्ताम् ।
यावत्प्रबोधं मुहुराह्वयस्व
प्रबुध्यते सा यदि किन्न्वसाध्यम् ॥ ३१.५॥

ये नाम शान्तिं परमां वहन्तो
नामानि शीताचलपुत्रिकायाः ।
सङ्कीर्तयन्तो विजने वसन्ति
जयन्ततातादपि ते जयन्ति ॥ ३१.६॥

नामानि सङ्कीर्तयतां जनानां

कारुण्यवत्याः करिवक्त्रमातुः ।
पुनर्जनन्या जठरे निवासा-
दायासवत्ता भवतीति मिथ्या ॥ ३१.७॥

पापैस्समन्तात्समभिद्रुतोऽपि
विश्वस्य ते विक्रममस्मि धीरः ।
न चेद्रसज्ञे भवती ब्रवीति
नामानि शीतांशुभृतो हतोऽहम् ॥ ३१.८॥

देहीति सम्पल्लवदर्पितानां
द्वारेषु घोषं कुरुषे परेषाम् ।
भवानि भद्रे भुवनाम्ब दुर्गे
पाहीति नायाति किमम्ब जिह्वे ॥ ३१.९॥

वाक्यानि वक्तुं यदि ते रसज्ञे
रसोज्ज्वलानि व्यसनं गरीयः ।
किं वा नमोन्तानि सुधां किरन्ति
नामानि नो सन्ति कुमारमातुः ॥ ३१.१०॥

यद् गीयते शैलसुताभिधानं
तदेव बोध्यं सुकृतं प्रधानम् ।
अज्ञानिलोकस्य कृते भणन्ति
यज्ञादिपुण्यानि पराणि विज्ञाः ॥ ३१.११॥

साम्ना प्रयुक्तेन जगद्वशे स्यात्
नाम्ना सदोक्तेन जगद्विनेत्री ।
वेदोभयं सम्यगिदं कृती यो
भवे भयं तस्य कुतोऽपि न स्यात् ॥ ३१.१२॥

सङ्कीर्तनात्तुष्यति शर्वयोषा
तुष्टा त्वभीष्टं न ददाति नैषा ।
इमं त्वविज्ञाय जगत्युपायं
व्रजन्त्यपायं बहुधा मनुष्याः ॥ ३१.१३॥

भाषे भुजङ्गाभरणप्रियाया
नामानि कामानितरान् विहाय ।
अपि प्रपञ्चातिगघोरकृत्यं
करोतु किं मां तरणेरपत्यम् ॥ ३१.१४॥

यज्ञेन दानैः कठिनव्रतैर्वा
सिद्धिं य इच्छेत्स ग्रहीतुमिच्छेत् ।
मातुः शयानोऽङ्कतले शशाङ्कं
महेश्वरीं कीर्तयतस्तु सिद्धिः ॥ ३१.१५॥

रहस्यतन्त्राणि विविच्य दूरं
व्याजं विमुच्य प्रवदामि सारम् ।
नामैव कामारिपुरन्ध्रिकायाः
सिद्धेर्निदानं न मखो न दानम् ॥ ३१.१६॥

पीयूषमीषन्मधुरं भणन्ति
ये नाम रामाधरपानलोलाः ।
कामारिरामाह्वयगानलोलाः
कवीश्वराः काञ्जिकमालपन्ति ॥ ३१.१७॥

सुधाघटः कोऽप्यधरो वधूनां
कविस्सुधातोयधरोऽभिधेयः ।
अयं सुधावीचिवितानमाली
नामप्रणादो नगकन्यकायाः ॥ ३१.१८॥

सुरालये भातितरां सुधैका
सुधा परा वाचि महाकवीनाम् ।
बिम्बाधरे कञ्जदृशां सुधाऽन्या
सुधेतरा नामनि लोकमातुः ॥ ३१.१९॥

माधुर्यमाभात्यधरे वधूनां
चकोरबन्धोः शकले प्रसादः ।
त्रिस्रोतसो वारिणि पावनत्वं
त्रयं च नाम्नि त्रिपुराम्बिकायाः ॥ ३१.२०॥

या माधुरी प्रेमभरेण दष्टे
जागर्ति कान्तावरदन्तचेले ।
सा दृश्यते भक्तिभरेण गीते
धराधराधीशसुताभिधाने ॥ ३१.२१॥

यत्ते जगल्लम्पटकेऽपि वर्णा-
स्तन्मेऽमृतं नाम नगात्मजायाः ।

लालामयो यो मम तं ब्रवीषि
सुधामयं स्त्रीदशनच्छदं त्वम् ॥ ३१.२२॥

उच्चारयोच्चाटितपातकानि
नामानि जिह्वे भुवनस्य मातुः ।
तदा वदामो मधुचूतरम्भा-
रामाधरास्ते रुचये यदि स्युः ॥ ३१.२३॥ □ □ @@773 □ □

आक्षेपमिक्षोरधिकं विधत्ते
पीयूषदोषानभितोऽभिधत्ते ।
कान्ताधरारब्धदुरन्तवादः
कपर्दिकान्तावरनामनादः ॥ ३१.२४॥

विश्वासहीनैः सुतरामबोध्यं
नामानुभावं नगकन्यकायाः ।
जयन्तु सिद्धैरपि गीयमानं
गायन्त्य एता उपजातयो नः ॥ ३१.२५॥ 775

%c08-q4/Jayaram.Manda/itrans.txt medskip

द्वात्रिंशः स्तबकः
भक्तिर्योगश्च (आर्यागीतिवृत्तम्)

विदधातु सम्पदं मे
सकलजगन्नाथनयनहारिज़्योत्स्नः ।
शीतोऽन्धकारहारी
हासशशी कश्चिदङ्करहितो मातुः ॥ ३२.१॥

करुणारसार्द्रहृदया
हृदयान्तरनिर्यदच्छवीचिस्मेरा ।
प्रमथेश्वरप्रियतमा
पादप्रेष्यस्य भवतु कल्याणय ॥ ३२.२॥

कारणकार्यविभेदाद्
रूपद्वितयं तवाम्ब यदृषिप्रोक्तम् ।
तत्रैकं भर्तुमिदं

विहर्तुमन्यत्तु भुतभर्तुर्ललने ॥ ३२.३॥

श्रोतुं स्तोत्रविशेषं
भक्तविशेषं च बोद्धुमयमीदृगिति ।
दातुं च वाञ्छितार्थं
तव मातश्चन्द्रलोकरूपं भवति ॥ ३२.४॥

कीशकिशोरन्यायात्
कारणरूपं तवाम्ब योगी धत्ते ।
ओतुकिशोरन्यायाद्
भक्तं परिपासि कार्यरूपेण त्वम् ॥ ३२.५॥

दृढधारणा न चेत्त्व-
च्च्यवते योगी महेशनयनज्योत्स्ने ।
नायं ममेति भाव-
स्तव यदि सद्यः सवित्रि भक्तं त्यजसि ॥ ३२.६॥

शिथिलधृतिर्योगी स्याद्
बाह्यैर्विषयैर्नितान्तमाकृष्टो यः ।
स्वीयमतिर्लुप्यति ते
भक्तेऽहन्ताप्रसारकलुषे मातः ॥ ३२.७॥

साहङ्कृतिर्न भक्तिः
सबाह्यविषया धृतिर्न सर्वेश्वरि ते ।
अविजानन्तावेतद्
भक्तो योगी च नैव सिद्धौ स्याताम् ॥ ३२.८॥

व्यक्तित्वादपि यस्य
प्रियं त्वदीयं सवित्रि पादाम्भोजम् ।
सोऽद्भुतशक्तिर्भक्तो
भगवति किं किं करोति नास्मिन् जगति ॥ ३२.९॥

व्यक्तित्वलोभविवशे
सिद्धः कामोऽपि भवति समवच्छिन्नः ।
प्राप्तोऽपि सलिलराशिं
सलिलानि घटः कियन्ति सङ्गृह्णीयात् ॥ ३२.१०॥

जीवन्नेव नरो यः

सायुज्यं ते प्रयाति शम्भोः प्रमदे ।
सर्वे कामास्तस्य
प्रयान्ति वशमाशु वीतविविधभ्रान्तेः ॥ ३२.११॥

व्यक्तित्वं तुभ्यमिदं
मनीषया मे प्रदत्तमधिकारिण्या ।
बहुकालभोगबलतो
विवदति देहो मदम्ब किं करवाणि ॥ ३२.१२॥

स्थूलेन वर्ष्मणा सह
सूक्ष्मा कलहं मतिर्न कर्तुं शक्ता ।
सुतरां बलवति मातर्-
बलाद् गृहाण स्वयं त्वमस्मात्स्वीयम् ॥ ३२.१३॥

सर्वेषां हृदि यस्मात्-
त्वमसि प्राणात्मिकाम्ब हेतोस्तस्मात् ।
अखिलप्राण्याराधन-
माराधननिर्विशेषमगपुत्रि तव ॥ ३२.१४॥

जुह्वति केऽपि कृशानौ
तस्मात्प्राप्तिस्तवेति सम्पश्यन्तः ।
अपरे प्राणिषु जुह्वति
साक्षात्प्राणात्मिकाऽसि तेष्वन्तरिति ॥ ३२.१५॥

प्राणिष्वपि यः प्राणं
भूतादिमनादिमात्मनि स्थितमनघम् ।
सततमुपास्ते योगी
तस्मिन् होमेन तेऽम्ब तृप्तिस्सुलभा ॥ ३२.१६॥

आत्मनि योऽम्ब श्रेष्ठे
प्राणे प्राणान् जुहोति दहराभिमुखः ।
त्वद्रूपे हतपापे
तेन जितं सकलमीशचित्तारामे ॥ ३२.१७॥

उपसंहृतमखिलेभ्यो
विषयेभ्यो निर्निमेषमन्तःकृष्टम् ।
हृदि दृढपदेन चक्षु-
स्त्वद्रूपे हूयते मदम्ब प्राणे ॥ ३२.१८॥

अन्तस्स्वरं निगूढं
श्रेष्ठप्राणस्य देवि तव भागस्य ।
शृण्वदिव प्रणवाख्यं
श्रवणं तत्रैव भवति जगदम्ब हुतम् ॥ ३२.१९॥

सर्वेषां मन्त्राणां
स्तोत्राणां चेशचित्तनाथे प्रकृतौ ।
गूढं सदा स्वरन्त्यां
प्राणन्त्यां त्वयि जुहोति मौनी वाचम् ॥ ३२.२०॥

देहे स्खलति मनश्चेत्
विषयेषु हुतं दधाति विषयात्मत्वम् ।
आवृत्तं यदि देहाद्
सूक्ष्मायां त्वयि हुतं त्वदाकृति भवति ॥ ३२.२१॥

त्वग्रसनघ्राणाना-
मनुभूतीः प्राणशक्तिसात्कुर्वाणः ।
कं नार्पयते भोगं
भगवति ते सर्वलोकपार्थिववनिते ॥ ३२.२२॥

गच्छन् कुर्वन् विसृजन्
रममाणाश्चाम्ब सकललोकाधीशे ।
यः केवलां क्रियामपि
चिन्तयते तेन नित्ययज्ञः क्रियते ॥ ३२.२३॥

सर्वेषामग्नीनां
प्राणाग्निस्तव विभूतिरुक्तः श्रेष्ठः ।
तस्मिन्हुतं तु सुहुतं
द्रव्याणि धियः क्रियाश्च मन्त्रः प्रणवः ॥ ३२.२४॥

आर्यागीतीनामय-
मधरीकृतमधुसुधाधिमाधुर्यरसः ।
वर्गो गणपतिवदना-
न्निष्क्रान्तो भवतु शर्वसुदृशः प्रीत्यै ॥ ३२.२५॥ 800

॥ समाप्तं च अष्टमं शतकम् ॥

%c09-q1/Karthik.Sitaram.Tenneti/c09-q1|txt medskip

नवमं शतकम्
त्रयस्त्रिंशः स्तबकः
जपो योगोऽर्पणं च (वंशस्थवृत्तम्)

सुधां किरन्तोऽखिलतापहारिणीं
तमो हरन्तः पटलेन रोचिषाम् ।
श्रियं दिशन्तो दिशि दिश्यसङ्क्षयां
जयन्ति शीताद्रिसुतास्मिताङ्कुराः ॥ ३३.१॥

कृपाकटाक्षस्तव केन वाऽऽप्यते
महेशशुद्धान्तपुरन्ध्रि कर्मणा ।
निरन्तरं मन्त्रजपेन वा मतेर्-
विशोधनेनोत मनोर्पणेन वा ॥ ३३.२॥

विशोधनाद्देवि मतेः प्रगृह्यसे
मनोर्पणेनेशवधु प्रसीदसि ।
जपेन मन्त्रस्य शुभस्य वर्धसे
जगत्त्रयीधात्रि कलेबरान्तरे ॥ ३३.३॥

मनःप्रतापस्य भवत्यसंशयं
प्रवर्धनं वैदिकमन्त्रचिन्तनम् ।
प्रशस्यते प्राणमहःप्रदीपने
दयान्विते तान्त्रिकमन्त्रसेविता ॥ ३३.४॥

तवाम्बिके तान्त्रिकमन्त्रमुत्तमं
स्तवातिगं यः कनकाङ्गि सेवते ।
विचित्रयन्त्रादिव वैद्युतं मह-
स्ततो विनिर्यद् भुवनं विगाहते ॥ ३३.५॥

न तस्य चेतो विकृतेर्वशे भवे-
न्न तस्य दृष्टिर्विषयैर्विकृष्यते ।
न तस्य रोगैरपकृष्यते वपुः
सवित्रि यस्ते भजते महामनुम् ॥ ३३.६॥

स्मरन्ति मायां गगनाग्निशान्तिभिः
सहाच्छभासा सहिताभिरम्बिके ।
तथा रसज्ञां द्रुहिणाग्निशान्तिभिर्-
भणन्ति दोग्ध्रीं तु खषष्ठबिन्दुभिः ॥ ३३.७॥

अभण्यताद्या भुवनेश्वरी बुधैर्-
अनन्तरा मातरगादि कालिका ।
प्रचण्डचण्डी परिकीर्तिता परा
त्रयोऽप्यमी ते मनवो महाफलाः ॥ ३३.८॥

उपाधिभूतं शुचि नाभसं रजो
दधाति साक्षाद् भुवनेश्वरीपदम् ।
तदाश्रया व्यापकशक्तिरद्भुता
मनस्विनी काचन कालिकेरिता ॥ ३३.९॥

अमर्त्यसाम्राज्यभृतः प्रवर्तिका
विशाललोकत्रयरङ्गनर्तिका ।
पराक्रमाणामधिनायिकोच्यते
प्रचण्डचण्डीति कला सवित्रि ते ॥ ३३.१०॥

स्मरन्मनुं रोदिति भक्तिमांस्तव
प्रगृह्य पादं मुनिरम्ब लम्बते ।
फलं चिराय प्रथमः समाप्नुयात्
परो मरन्दं पद एव विन्दति ॥ ३३.११॥

पदं तवान्विष्टमनेकदा मुदा
हृदन्तरे स्पृष्टमिवेदमम्बिके ।
पलायतेऽधोऽहमनन्तरं शुचा
परात्परे रोदिमि मन्त्रशब्दतः ॥ ३३.१२॥

भणन्ति सन्तो मरुतां सवित्रि ते
महामनुं त्वत्पदभास्करातपम् ।
ततो हि मूलात्स्वर एष निर्गत-
स्तपत्यघौघं जरयन्महोमयः ॥ ३३.१३॥

सवित्रि साक्षाच्चरणस्य ते प्रभां
विधारयँस्तज्जनिमूलमार्गणे ।
मुहुर्मुहुस्सोऽहमजे धृतोद्यमः

पथा महर्षी रमणो बभाण यम् ॥ ३३.१४॥

अहम्पदार्थो यदि चिल्लता तता
किमेष दोग्ध्रीमनुभावतोऽपरः ।
अहं यदि प्राणनिनादवैखरी
न कूर्च आख्यातुमसेति शक्यते ॥ ३३.१५॥

परे तु यां चेतनशक्तिमामन-
न्त्यभाणि सा कुण्डलिनीति तान्त्रिकैः ।
विलक्षणा नाम चमत्कृतिर्जडान्
प्रतारयत्यागमसारदूरगान् ॥ ३३.१६॥

भवत्यखण्डानुभवः प्रबोधिना-
मतीव सूक्ष्मानुभवश्च योगिनाम् ।
करं गतास्सर्वविधाश्च शेरते
महेश्वरीमन्त्रपरस्य सिद्धयः ॥ ३३.१७॥

सहस्रसङ्ख्यानि जनूंषि वा मम
प्रियाणि भक्तिस्तव चेद्भवे भवे ।
तव स्मृतिं चेद् गलयेन्न सम्मदं
करोति मोक्षोऽपि ममेशवल्लभे ॥ ३३.१८॥

विनैव दृष्टिं यदि सत्प्रशिष्यते
न सत्तयाऽर्थः फलहीनया तया ।
इदं तु सत् किन्न्वसतो विशिष्यते
न तात मुक्तोपलयोस्तदा भिदा ॥ ३३.१९॥

शुचां निवृत्तिर्यदि मुक्तिरिष्यते
सुखप्रवृत्तिर्यदि नात्र विद्यते ।
सदेव चेत्तत्र मतिर्न भासते
जडं विमुक्ताद्वचसैव भिद्यते ॥ ३३.२०॥

मतिः पराची व्यवहारकारणं
भवेत्प्रतीची परमार्थसम्पदि ।
उभे दिशौ यस्य मतिर्विगाहते
पदा च मूर्ध्ना च स सिद्ध इष्यते ॥ ३३.२१॥

दृढं पदं यस्य मतेः सदाऽन्तरे

स ना धियोऽग्रेण बहिश्चरन्नपि ।
सवित्रि मग्नस्त्वयि सम्प्रकीर्त्यते
न तस्य भीः सञ्चरतोऽपि संसृतेः ॥ ३३.२२॥

विचिन्तने चिन्तनशक्तिमद्भुतां
विलोकने लोकनशक्तिमुज्ज्वलाम् ।
प्रभाषणे भाषणशक्तिमुत्तमां
निभालयंस्त्वां विषयैर्न जीयते ॥ ३३.२३॥

विलोकमानस्य विलोकनं कवेर्-
विलोक्यमानेषु विहाय सक्तताम् ।
विलोचने सन्निहिता निरन्तरं
विधूतभीतिर्विबुधस्तुता शिवा ॥ ३३.२४॥

अयं भयानां परिमार्जकस्सतां
समस्तपापौघनिवारणक्षमः ।
मनोज्ञवंशस्थगणो गणेशितुर्-
मनो महेशाब्जदृशो धिनोत्वलम् ॥ ३३.२५॥ 825

%c09-q2/Muralidhar.Kalavacharla/uma_sahasram_chap9-q2।txt medskip

चतुस्त्रिंशः स्तबकः
प्रार्थना (हरिणीवृत्तम्)

विदितमहिमा विश्वाधानादनेकविधाद्भुतात्
प्रथितचरितः शर्वालोकप्रतापविवर्धनात् ।
प्रकटितगुणः पापध्वान्तप्रसारनिरोधनात्
प्रदिशतु शिवाहासो भासां निधिः कुशलानि मे ॥ ३४.१॥

हृदि करुणया पूर्णा बाह्वोर्बलेन महीयसा
पदकमलयोर्लक्ष्म्या भक्तैर्जनैरुपजीव्यया ।
मुखसितकरे लावण्येन त्रिणेत्रदृशां बलं
बहु विदधता काली माताऽवतात्पदसेविनम् ॥ ३४.२॥

जगदधिपया सिद्धं दोग्ध्र्याऽथवोत रसज्ञया
मुनिजननुतं देवीमन्त्रं जपेद्यदि मानवः ।

अमृतजलदीभूतः पूतः वियोगविशेषवित्
स इह वसुधालोके धारा गिरामभिवर्षति ॥ ३४.३॥

इममभिमुखीभूता शातोदरी कमलालया
हयगजघटापूर्णाऽभ्यर्णं समेत्य निषेवते ।
सविबुधमिदं विश्वं तस्य प्रयाति पुनर्वशं
प्रथितयशसां सिद्धीनां चाप्यमुं भजतेऽष्टकम् ॥ ३४.४॥

सुविमलधियस्तस्य क्रोधाद् दृगम्बुधुतद्युती
रिपुजनवधूगण्डाभोगो भवेदुत पाण्डुरः ।
सपदि भुवनव्याप्तं चाप्तैः प्रमाणपुरस्सरं
भणितमजरं भद्रं ज्योतिः परं हृदि भासते ॥ ३४.५॥

अदयमरिभिः क्रान्ते राष्ट्रे त्वमीश्वरि रक्षिका
सुमशरमुखैर्धूते चित्ते त्वमीश्वरि रक्षिका ।
प्रबलदुरितैर्ग्रस्ते वंशे त्वमीश्वरि रक्षिका-
ऽप्यसृजति जलं मेघे मोघे त्वमीश्वरि रक्षिका ॥ ३४.६॥

भगवति निजौ साक्षात्पुत्रौ बृहस्पतिपावकौ
गणपतिगुहावेतौ वेषान्तरव्यवहारतः ।
भरतधरणीखण्डे हेतोः कुतः कृतसम्भवौ
कलकलयुते काली देवि व्यधाः कथय द्रुतम् ॥ ३४.७॥

समयमयि ते धृत्वा पादाम्बुजं रमणः सुतो
गिरिवरगुहास्वन्तः शान्तो नयेद्यदि नाद्भुतम् ।
स्थलविरहतः स्वीयस्थाने किमत्र समागतो
न वदसि कुतः कार्यं तस्मै कुलाचलकन्यके ॥ ३४.८॥

परिभणति चेच्छिष्यव्यूहे महाद्भुतसङ्गतीर्-
जननि रमणो योगीशानस्ततो बहु नो फलम् ।
अमिततमया दृष्टेः शक्त्या कदा सरणिं नये-
दपथपतितं धात्रीलोकं तदेव वदाम्बिके ॥ ३४.९॥

अहमिह कुतो हेतोर्जातो विषण्णतमे स्थले
चरणकमलच्छायां मायाधिराज्ञि विहाय ते ।
परमकरुणो घोरः शापः किमेष सवित्रि ते
किमपि भुवि वा कार्यं कर्तुं नियोजितवत्यसि ॥ ३४.१०॥

व्रजति विलयं स्नेहो दूरप्रवासवशादिति
प्रवदति बुधः कश्चित्सत्यं प्रभाति तदम्बिके ।
भगवति निजे कुक्षौ जातं दिवो धरणीगतं
स्मृतिसरणितो दूरे हा हा करोषि रुषा यथा ॥ ३४.११॥

मम तु विमला हृद्या विद्या महेश्वरि याऽभव-
न्मनसि च परा चित्रा शक्तिश्चिरन्तनि याऽभवत् ।
वचसि च महद्भाग्यं श्लाघ्यं यदीड्यतमेऽभवत्
तदयि गलितं मत्तो वित्तत्रयं भवतो भुवि ॥ ३४.१२॥

कृतमयि मया पापं घोरं सुकर्मसु सङ्गिनां
यदहमदयो विघ्नं नृणां मुहुर्मुहुराचरम् ।
अतिकटु फलं तस्याश्नामि श्रितो नरविग्रहं
प्रमथनृपतेर्जाये माये जनन्यव मामिमम् ॥ ३४.१३॥

न भवसि दृशोर्मार्गे लोकाधिराज्ञि कुतो गिरो
न च बहुकृपे स्वप्ने वा त्वं प्रयच्छसि दर्शनम् ।
अपनयसि नो सन्देहं वा परोक्षकृपावशा-
दपि सुरनुते लग्ना कार्यान्तरे किमुतादया ॥ ३४.१४॥

निरवधिशिवे माहात्म्यं ते भणन्ति महर्षयो
मनसि करुणा न न्यूना ते यथा प्रथिताः कथाः ।
तदिदमखिलं मिथ्या स्यादित्यसाध्यमुदीरितुं
यदसि विमुखी पुत्रे किं वा भवेदिह कारणम् ॥ ३४.१५॥

भुवनभरणं नाल्पं कार्यं न देवि तव क्षणो
गुरु च बहुलं कृत्यं नित्यं तवास्ति न तन्मृषा ।
न तव कठिनं मौनं निन्द्यं तथापि न पार्वति
स्मर सकृदिमं दीनं पुत्रं तदेव ममाधिकम् ॥ ३४.१६॥

न भवति सुधाधारावर्षादयं मुदितस्तनौ
मधुमदमुषां वाचां सर्गान्न चाप्ययमुद्धतः ।
तव पदयुगे निष्ठालाभान्न तृप्यति चाप्ययं
भगवति चिरात् सन्देशं ते सुतः प्रतिवीक्षते ॥ ३४.१७॥

किमिह भुवने कर्तव्यं मे किमर्थमिहागतो-
ऽस्म्यवनि जगतां कं वोपायं श्रये निजशक्तये ।
किमपि किमपि स्वान्ते ध्वान्ते यथा परिदृश्यते

स्फुटमभयदे वक्तुं किञ्चिच्छ्रमं त्वमुरीकुरु ॥ ३४.१८॥

न मम परमे मुक्तावाशा न वा विभवाष्टके
न च गजघटापूर्णायां वा महेश्वरि सम्पदि ।
न च मधुमुचां वाचां सर्गे निरर्गलवैभवे
मुनिभुवि कुतो जातः सोऽहं तदेव समीर्यताम् ॥ ३४.१९॥

प्रथममनघं वाञ्छाम्यन्नं सदारसुतातिथेर्-
भगवति ततः पादद्वन्द्वे तवाविचलां स्थितिम् ।
अथ सुरजगद्वार्ताज्ञानं सवित्रि ततः परं
मुनिभुवि भवे हेतुं ज्ञातुं मृगाक्षि पुरद्विषः ॥ ३४.२०॥

यदि तव कृपा पुत्रे भक्ते पदांबुजवन्दिनि
व्रतशतकृशे शीर्षाम्भोजामृतं त्वयि जुह्वति ।
भरतधरणीसेवालोले भवप्रियभामिनि
स्वयमुपदिशामुष्मै योग्यं विधानमनाविलम् ॥ ३४.२१॥

जननि जगतां स्वल्पे कामेऽप्ययं त्वयि लम्बते
पुरभिदबले मध्ये कामेऽप्ययं त्वयि लम्बते ।
बहुलकरुणे श्रेष्ठे कामेऽप्ययं त्वयि लम्बते
भगवति परे वीते कामेऽप्ययं त्वयि लम्बते ॥ ३४.२२॥

तनुभुवि मयि प्रीत्या वाऽम्ब त्रिलोकविधायिके
पदयुगरते वात्सल्याद्वा पुरारिपुरन्ध्रिके ।
स्वविमलयशोगानासक्ते कृपावशतोऽथवा
परुषमजरे मौनं त्यक्त्वा स्फुटीकुरु मे गतिम् ॥ ३४.२३॥

जयतु भरतक्षोणीखण्डं विषादविवर्जितं
जयतु गणपस्तस्य क्षेमं विधातुमना मुनिः ।
जयतु रमणस्तस्याचार्यो महर्षिकुलाचलो
जयतु च तयोर्माता पूता महेशविलासिनी ॥ ३४.२४॥

गणपतिमुनेरेषा भाषाविदां हृदयङ्गमा
सुकविसुहृदः शब्दैरत्युज्ज्वला हरिणीततिः ।
ललितचतुरैर्भावैर्यान्ती सुरूपवनान्तरं
मदयतु मनः कामारातेर्निशान्तमृगीदृशः ॥ ३४.२५॥ 

%c09-q3/Sai.Susarla/uma-c09-q3।txt medskip

पञ्चत्रिंशः स्तबकः
प्रार्थना (इन्दुवदनावृत्तम्)

अन्धतमसं शशिविभामभिदधाना
कान्तिमलमास्यकमलस्य विदधाना ।
अन्धकविरोधिदयितास्मितलवश्रीर्-
भातु भुवनस्य सकलस्य कुशलाय ॥ ३५.१॥

भाहि विविधा कृतिमती द्विजसमूहे
पाहि गतिहीनमखिलेश्वरि कुलं नः ।
देहि बहुकालभजकाय वरमेतं
याहि नगनन्दिनि यशः शशिवलक्षम् ॥ ३५.२॥

वारयति घोरतरपातकसमूहं
वर्धयति धर्ममपि शर्मकरमन्ते ।
किङ्करजनस्य न किमावहति भव्यं
शङ्करपुरन्ध्रि तव पादपरिचर्या ॥ ३५.३॥

यस्य मनुजस्य हृदयेऽस्ति सदये ते
नाकचरसेव्यमयि पादसरसीजम् ।
तं भजति पद्ममुखि पद्मवनवासा
लाभभवने भवतु नामरपुरोधाः ॥ ३५.४॥

यद्यखिलमौनिगणगीतगुणजालं
कालभयहारिकरुणारसमरन्दम् ।
अद्रितनयाङ्घ्रिजलजन्म हृदये स्या-
दष्टमगतोऽपि विदधातु रविजः किम् ॥ ३५.५॥

लेखललनाकचसुमैः कृतबलिं ते
यो भजति पादघृणिमालिनमनन्ते ।
निस्तरति नूनमयमस्तमितमोहः
शोकतिमिरं सकललोकगणमातः ॥ ३५.६॥

शीतकरदर्पहरवक्त्रजलजाते
शीतगिरिनन्दिनि तवाङ्घ्रिजलजातम् ।

यः स्मरति देवि हृदि विस्मरति सोऽयं
विष्टपमशेषमपि कष्टततिमुक्तः ॥ ३५.७॥

सक्तिरयि यस्य तव पादसरसीजे
शक्तिधरमातरनलाक्षगृहनाथे ।
पूर्णशशिजैत्रमुखि पुण्यपुरुषोऽसौ
स्वर्णशिखरीव बुधलोकशरणं स्यात् ॥ ३५.८॥

वैरिगणनिर्दलनखड्गवरपाणे
वाससि पदोर्दशनवाससि च शोणे ।
नेत्रमिषपावकविशेषितललाटे
पापमखिलं जहि मृगाधिपतिघोटे ॥ ३५.९॥

वेदचयवेदिजनवादविषयस्य
प्रतियुतलोकततिशोकशमनस्य ।
वेतनविवर्जितभटोऽयमहमङ्घ्रेः
शीतकरपोतधरपुण्यवनिते ते ॥ ३५.१०॥

कार्यमयि मे किमपि कार्यपटुबुद्धेः
पादसरसीजयुगलीपरिजनस्य ।
अम्ब वद जम्भरिपुगीतगुणजाले
शुम्भकुलनाशकरि शम्भुकुलयोषे ॥ ३५.११॥

त्वं यदि शिलावदयि नो वदसि कृत्यं
नास्ति तव राज्यपटुबुद्धिरिति सत्यम् ।
आदिश यथार्हकरणीयकृतिनित्यं
राज्ञि भुवनस्य चरणाम्बुरुहभृत्यम् ॥ ३५.१२॥

पञ्चसु विहाय मनसः कमपि सङ्गं
पुत्रधनमित्रजनबान्धववधूषु ।
एष भजते जननि पादजलजं ते
पालय नु मुञ्च नु तवोपरि स भारः ॥ ३५.१३॥

वज्रधरमुख्यसुरसञ्चयकिरीट-
स्थापितमहार्घमणिरञ्जितनखाय ।
जीवितमदायि जगदीश्वरि मदीयं
पादजलजाय तव पालय नु मा वा ॥ ३५.१४॥

देहि जगदीश्वरि न वा मदभिलाषं
पाहि करुणावति न वा कुलमिदं नः ।
शूलधरकामिनि सुरासुरनिषेव्यं
पादकमलं तव परे न विजहामि ॥ ३५.१५॥

पासि किल पादयुगकिङ्करसमूहं
हंसि किल पापततिमापदि नुता त्वम् ।
दन्तिवदनप्रसु वदन्ति मतिमन्तो
नानृतमिदं भवतु नाकिजनवर्ण्ये ॥ ३५.१६॥

शक्रमुखदेवततिवन्दितविसृष्टे
वक्रघनकेशि चरणे तव लुठन्तम् ।
आपदि निमग्नमिममाश्रितमनाथं
नन्दिहयसुन्दरि न पालयसि केन ॥ ३५.१७॥

घोषमयमम्ब विदधाति पदलग्नो
नावसि पुराणि किमु नारि बधिराऽसि ।
वन्दिसुरबृन्दनुतिभाषितहृतं वा
कर्णयुगलं तव कपालिकुलयोषे ॥ ३५.१८॥

अम्ब भव बिम्बफलकल्परदचेले
शम्बरसपत्नबलकारिबहुलीले ।
प्रागमृतभानुमुकुटस्य मदयित्री
तं कुरु ततः परमुरीकृतमदर्थम् ॥ ३५.१९॥

निर्मलसुधाकरकलाकलितमस्ते
धर्मरतपालिनि दयावति नमस्ते ।
एतमव देवि चरणाम्बुरुहबन्धुं
शीतधरणीधरसुते गमय नान्धुम् ॥ ३५.२०॥

अद्रिकुलपालककुलध्वजपताके
भद्रगजगामिनि दरिद्रमयि मत्या ।
क्षुद्रमिव शोच्यमिममङ्घ्रिजलजाप्तं
रुद्रदयिते जननि पाहि न जहीहि ॥ ३५.२१॥

अस्तु तव पादकमले स्थितिरजस्रं
नास्ति परदुःखविवशे हृदि तु शान्तिः ।
अस्तु करुणेऽयमस्तु मतिलोपः

कष्टमिदमम्ब मम भूरि परिशिष्टम् ॥ ३५.२२॥

दुःखसुखभेदरहिता न मतिरासीत्
साधुखलभेदरहिता न मतिरासीत् ।
भाग्यमितिमान्यमथवा मम तदेतन्-
मातरिह सङ्घभजने यदवकाशः ॥ ३५.२३॥

अस्तु मम भेदमतिरस्तु मम पक्षो
यत्नपरताऽस्तु मम मास्तु च विमोक्षः ।
मोक्षमयि वेद्मि कुलकष्टततिमोक्षं
प्रेषय सकृत्तव महेश्वरि कटाक्षम् ॥ ३५.२४॥

शाक्वरगणेन मुखरेऽत्र गणनाथे
विष्णुयशसीशवधु जिष्णुमुखवन्द्ये ।
अम्ब करुणां कुरु शिवङ्करि निरङ्क-
स्वच्छकिरणार्भकविभूषितललाटे ॥ ३५.२५॥ 875

%c09-q4/Krishnashankavaram/devi_itranstxt medskip

षट्त्रिंशः स्तबकः
प्रकीर्णकम् (तूणकवृत्तम्)

उन्नतस्तनस्थलीविलोलहारमौक्तिक-
व्रातदीधितिप्रतानबद्धसौहृदा सदा ।
अन्धकारिकामिनीदरस्मितद्युतिर्धुनो-
त्वन्धकारमन्तरङ्गवासिनं घनं मम ॥ ३६.१॥

अम्बरस्थले पुरा पुरन्दरो ददर्श यां
यां वदन्ति पर्वतप्रसूतिमैतिहासिकाः ।
सा परा पुरामरेः पुरन्ध्रिकाऽखिलाम्बिका
पुत्रकाय मज्जते ददातु दक्षिणं करम् ॥ ३६.२॥

पादपङ्कजे धृता नरैरबाह्यभक्तिभिः
पाणिपङ्कजे धृता नवेन्दुखण्डधारिणा ।
चारुहेमहंसका मनोज्ञरत्नकङ्कणा
लोकजालपालिनी पुनातु मां विलासिनी ॥ ३६.३॥

उक्षराजवाहनस्य जीविताद् गरीयसी
पक्षिराजवाहनादिवर्ण्यमानवैभवा ।
केकिलोकचक्रवर्तिवाहनेन पुत्रिणी
वारणारिसार्वभौमवाहना गतिर्मम ॥ ३६.४॥

बालकुन्दकुट्मलालिकान्तदन्तपङ्क्तिका
कुण्डलानुबिम्बशोभिशुद्धगण्डमण्डला ।
बिभ्रती रतीशवेत्रविभ्रमं भ्रुवोर्युगं
शुभ्रभानुशेखरस्य सुन्दरी प्रणम्यते ॥ ३६.५॥

आजिदक्षवाहवैरियातुधानबाधितं
या ररक्ष देवबृन्दमिन्दिरादिवन्दिता ।
सा कटाक्षपातधूतभक्तलोकपातका
पावकाक्षसुन्दरी परात्परा गतिर्मम ॥ ३६.६॥

तारकाधिनाथचूडचित्तरङ्गनर्तकी
मन्दहाससुन्दरास्यपङ्कजा नगात्मजा ।
दीनपोषकृत्यनित्यबुद्धबुद्धिरव्यया
गृह्यते गणाधिपेन सर्वतो नृणां पदे ॥ ३६.७॥

अष्टमीशशाङ्कखण्डदर्पभञ्जनालिका
विष्टपत्रयाधिनाथमानसस्य डोलिका ।
पापपुञ्जनाशकारिपादकञ्जधूलिका
श्रेयसे ममास्तु शैललोकपालबालिका ॥ ३६.८॥

सानुमत्कुलाधिनाथबालिकालिकुन्तला
जङ्गमेव काऽपि तप्तहेमसालभञ्जिका ।
भक्तियुक्तलोकशोकवारणाय दीक्षिता
शीतशीतवीक्षिता लघु स्यतादघं मम ॥ ३६.९॥

पुण्यनामसंहतिः पुरारिचित्तमोहिनी
पुष्पबाणचापचारुझिल्लिकाऽखिलाम्बिका ।
पुण्यवैरिपुष्टदुष्टदैत्यवंशनाशिनी
पुत्रकस्य रक्षणं पुरातनी करोतु मे ॥ ३६.१०॥

क्षाममध्यमस्थली सुधाघटोपमस्तनी
कृष्णसारलोचना कुमुद्वतीप्रियानना ।

भ्रूविलासधूतधैर्यकाञ्चनाद्रिकार्मुका
काचिदिक्षुकार्मुकस्य जीविका जयत्युमा ॥ ३६.११॥

लोहिताचलेश्वरस्य लोचनत्रयीहिता
लोहितप्रभानिमज्जदब्जजाण्डकन्दरा ।
हासकान्तिवर्ध्यमानसारसारिमण्डला
वासमत्र मे करोतु मानसे महेश्वरी ॥ ३६.१२॥

दक्षिणेक्षणप्रभाविजृम्भिताम्बुसम्भवा
काममित्रवामनेत्रधामतृप्तकैरवा ।
एकतः परः पुमान्परा वराङ्गनाऽन्यतः
शुभ्रकीर्तिरेकमूर्तिरादधातु नश्शिवम् ॥ ३६.१३॥

शुम्भदैत्यमारिणी सुपर्वहर्षकारिणी
शम्भुचित्तहारिणी मुनीन्द्रचित्तचारिणी ।
कामितार्थदायिनी करिप्रकाण्डगामिनी
वीतकल्कमादधातु विघ्नराजमम्बिका ॥ ३६.१४॥

देवतासपत्नवंशकाननानलच्छटा
वारणारिसार्वभौमवाहना घनालका ।
नन्दिवाहनस्य काऽपि नेत्रनन्दिनी सुधा
नेत्रलाञ्छितालिका सुतं पुनातु कालिका ॥ ३६.१५॥

राजसुन्दरानना मरालराजगामिनी
राजमौलिवल्लभा मृगाधिराजमध्यमा ।
राजमानविग्रहा विराजमानसद्गुणा
राजते महीधरे मदम्बिका विराजते ॥ ३६.१६॥

पर्वचन्द्रमण्डलप्रभाविडम्बनानना
पर्वताधिनाथवंशपावनी सनातनी ।
गर्वगन्धनाशिनी विभावरीविचारिणां
शर्वचित्तनायिका करोतु मङ्गलं मम ॥ ३६.१७॥

ओजसश्च तेजसश्च जन्मभूमिरच्युता
नीलकञ्जबन्धुबद्धमौलिरागमस्तुता ।
वीतरागपाशजालनाशबद्धकङ्कणा
विश्वपालिनी मया महेश्वरी विचिन्त्यते ॥ ३६.१८॥

अण्डमण्डलं यया निरन्तरं च पच्यते
संस्फुरत्यशेषभूतहार्दपीठिकासु या ।
श्वासदृष्टिसंविदूष्मनादवारिवर्त्मभिर्-
यामुपासते विदो नमामि तां परात्पराम् ॥ ३६.१९॥

पञ्चयुग्मवेषभृत्परात्परा सुरार्चिता
पञ्चवक्त्रवक्त्रपद्मचञ्चरीकलोकना ।
वञ्चकान्तरङ्गशत्रुसञ्चयप्रणाशिनी
प्रेतमञ्चशायिनी कुलं चिराय पातु मे ॥ ३६.२०॥

कर्मणा यथाविधि द्विजातयो यजन्ति यां
ब्रह्मणा यथाश्रुतं स्तुवन्ति यामधीतिनः ।
चेतसा यथा गुरूक्ति चिन्तयन्ति यां विदः
सा परा जगत्त्रयीजनन्यजा जयत्युमा ॥ ३६.२१॥

वासुदेवजायया विनम्रया निषेविता
वामदेवचाटुचित्रवाक्यबन्धलालिता ।
वासवादिदेवताजयप्रणादहर्षिता
वारयत्वघानि मे वसुन्धराभृतस्सुता ॥ ३६.२२॥

पूर्णिमासुधामरीचिसुन्दरास्यमण्डला
फुल्लपद्मपत्रदीर्घसम्प्रसन्नलोचना ।
पुण्यभूनिषेवणाय पुत्रमेतमुद्यतं
पूर्णकाममादधातु पादलग्नमम्बिका ॥ ३६.२३॥

लालयन्ति बालकं वतंसशीतदीधितिं
शीलयन्ति सूक्ष्मतां मनांसि योगिनामिव ।
कालयन्तु पापिनां कुलानि संहतीस्सतां
पालयन्तु च स्मितानि योषितः पुरद्विषः ॥ ३६.२४॥

पादसेविनः कवेर्मनोहरातिशक्वरी-
वर्ग एष नाट्यकारिनिर्जरीगणो यथा ।
लोकजालचक्रवर्तिपुण्ययोषितो मन-
स्सम्मदाय साधुकष्टवारणाय कल्पताम् ॥ ३६.२५॥   900

॥ समाप्तं च नवमं शतकम् ॥

%c10-q1/Jayanth.Ganapathiraju/c10-q1|txt medskip

दशमं शतकम्
सप्तत्रिंशः स्तबकः
तत्त्वविचारः (अनुष्टुब्वृत्तम्)

उद्दीपयतु नश्शक्तिमादिशक्तेर्दरस्मितम् ।
तत्त्वं यस्य महस्सूक्ष्ममानन्दो वेति संशयः ॥ ३७.१॥

पूर्णं प्रज्ञातृ सद्ब्रह्म तस्य ज्ञानं महेश्वरी ।
महिमा तेज आहोस्विच्छक्तिर्वा प्राण एव वा ॥ ३७.२॥

प्रचक्षते चिदात्मत्वं ज्ञातुर्ज्ञानस्य चोभयोः ।
प्रदीपस्य प्रभायाश्च ज्योतिराकृतितां यथा ॥ ३७.३॥

चित एकपदार्थत्वाच्चिच्चिता न विशिष्यते ।
तस्माद् गुणत्वं ज्ञानस्य शङ्करेण निराकृतम् ॥ ३७.४॥

ज्ञातुर्ज्ञानं स्वरूपं स्यान्न गुणो नापि च क्रिया ।
यदि स्वस्य स्वरूपेण वैशिष्ट्यमनवस्थितिः ॥ ३७.५॥

वाचैव शक्यते कर्तुं विभागस्स्वस्वरूपयोः ।
नानुभूत्या ततो द्वैतं सच्छक्त्योर्व्यावहारिकम् ॥ ३७.६॥

ब्रह्मज्ञानस्य पूर्णस्य विषयो द्यौरुदीर्यते ।
सा ब्रह्मणो व्यापकत्वाद्वस्तुतो नातिरिच्यते ॥ ३७.७॥

विकासादपि सङ्कोचात् सर्गप्रलययोर्द्वयोः ।
प्रज्ञानस्य बुधैरुक्तौ जन्मनाशावुभौ दिवः ॥ ३७.८॥

धर्मभूतं परस्येदं न कार्यं परमं नभः ।
अखण्डत्वान्न विकृतिर्विश्वस्मिन्नप्रकृतित्वतः ॥ ३७.९॥

आकाशे परमे दीप्यत् प्रज्ञानं परमात्मनः ।
एकाग्रत्वात्प्रवृद्धोष्मगभीरमभवन्महः ॥ ३७.१०॥

त्रिधैवं धर्मभूतस्य ज्ञानस्य विकृतिं विना ।

शुद्धत्वविषयत्वाभ्यां महस्त्वाच्च दशात्रयम् ॥ ३७.११॥

विज्ञाने भाति ये भान्ति भावा द्रव्यगुणादयः ।
न किञ्चिदनुभूयन्ते विज्ञानोपरमे तु ते ॥ ३७.१२॥

एवं स्वतः प्रकाशत्वं विषयाणां न दृश्यते ।
सिद्धिश्च परतो न स्यात् सम्बन्धं कञ्चिदन्तरा ॥ ३७.१३॥

दृश्यते विषयाकारा ग्रहणे स्मरणे च धीः ।
प्रज्ञाविषयतादात्म्यमेवं साक्षात्प्रदृश्यते ॥ ३७.१४॥

न चेत्समष्टिविज्ञानविभूतिरखिलं जगत् ।
विषयव्यष्टिविज्ञानतादात्म्यं नोपपद्यते ॥ ३७.१५॥

यथाऽस्मदादिविज्ञाने ध्येयं बुद्धिरिति द्वयम् ।
पूर्णे समष्टिविज्ञाने विकृतिः प्रकृतिस्तथा ॥ ३७.१६॥

परिणामो यथा स्वप्नः सूक्ष्मस्य स्थूलरूपतः ।
जाग्रत्प्रपञ्च एष स्यात्तथेश्वरमहाचितः ॥ ३७.१७॥

विकृतिस्सर्वभूतानि प्रकृतिः परदेवता ।
सतः पादस्तयोराद्या त्रिपादी गीयते परा ॥ ३७.१८॥

कबलीकृत्य सङ्कल्पानेकाऽपि स्याद्यथा मतिः ।
भूतानि कबलीकृत्य देवताऽपि तथा परा ॥ ३७.१९॥

भूतानामात्मानस्सर्गे संहृतौ च तथाऽऽत्मनि ।
प्रभवेद्देवता श्रेष्ठा सङ्कल्पानां यथा मतिः ॥ ३७.२०॥

अनुभूत्यात्मिका सेयमीशशक्तिः परात्परा ।
आधारचक्रे पिण्डेषु विराजति विभिन्नवत् ॥ ३७.२१॥

सूक्ष्मस्थूले ततः शाखे विद्युच्छक्तिसमीरवत् ।
तत्राद्या ज्ञानशक्तिस्स्यात् क्रियाशक्तिरनन्तरा ॥ ३७.२२॥

ज्ञानेन्द्रियाणि प्रथमा विभूतिर्मनसा सह ।
कर्मेन्द्रियाणि त्वपरा विभूतिस्सहसा सह ॥ ३७.२३॥

क्रियामूलमुत ज्ञानमूलं किमिति चिन्तयन् ।
आत्मशक्तिमितो विद्वानमृतत्वाय कल्पते ॥ ३७.२४॥

गभीरास्सुतरामेताः कालिकातत्त्वकारिकाः ।
धियो भासो गणपतेर्भवन्तु विदुषां मुदे ॥ ३७.२५॥ 925

%c10-q2/Bhavani.Mallajosyula/uma_c10_q2_1-25।txt medskip

अष्टत्रिंशः स्तबकः
दशमहाविद्याः (पादाकुलकवृत्तम्)

दूरीकुरुताद् दुःखं निखिलं दुर्गायास्तद्दरहसितं नः ।
रचितास्याम्भोमृद्भ्यां यदभुल्लेपनममलं ब्रह्माण्डस्य ॥ ३८.१॥

जन्तौ जन्तौ भुवि खेलन्ति भूते भूते नभसि लसन्ती ।
देवे देवे दिवि दीप्यन्ती पृथगिव पूर्णा संविज्जयति ॥ ३८.२॥

दहरसरोजाद् द्विदलसरोजं द्विदलसरोजाद्दशशतपत्रम्
दशशतपत्राद्देहं देहात् सकलं विषयं संविद् व्रजति ॥ ३८.३॥

वह्निज्वाला समिधमिवैषा सकलं देहं संवित्प्राप्ता ।
पृथगिव भूता व्यपगतवीर्या भवति सधूमा संसाराय ॥ ३८.४॥

अत्रानुभवस्सुखदुःखानामत्राहङ्कृतिरनृता भवति ।
अत्रैवेदं सकलं भिन्नं प्रतिभासेत प्रज्ञास्खलने ॥ ३८.५॥

दशशतपत्राद् द्विदलसरोजं द्विदलसरोजाद्दहरसरोजम् ।
अवतरतीशा येषामेषा तेषामन्तर्नित्या निष्ठा ॥ ३८.६॥

अथवा देहादावृत्तस्सन्नन्यतमस्यामासु स्थल्याम् ।
आधारस्थे कुलकुण्डे वा स्थितधीर्नित्यां निष्ठां लभते ॥ ३८.७॥

दशशतपत्रे शक्तिर्ललिता वज्रवती सा द्विदलसरोजे ।
दहाराम्बुरुहे भद्रा काली मूलाधारे भैरव्याख्या ॥ ३८.८॥

खेलति ललिता द्रवति स्थाने छिन्नग्रन्थिनि राजत्यैन्द्री ।

बद्धकवाटे भद्रा काली तपसा ज्वलिते भैरव्याख्या ॥ ३८.९॥

यद्यपि कालीवज्रेश्वर्यौ स्यातां भिन्ने इव पिण्डेषु ।
ओजस्तत्त्वस्यैक्यादण्डे न द्वौ शक्तेर्भेदौ भवतः ॥ ३८.१०॥

एवमभेदो यद्यपि कर्मद्वैधात् द्वैधं तत्रापि स्यात् ।
सैव पचन्ती भुवनं काली सैव दहन्ती शत्रूनैन्द्री ॥ ३८.११॥

पिण्डे चाण्डे जङ्गमसारः शुद्धा प्रज्ञा सुन्दर्युक्ता ।
विषयदशायां देशीभूता सेयं भुवनेश्वर्याख्याता ॥ ३८.१२॥

शून्यप्रख्या या चिल्लीना प्रलये ब्रह्मणि जन्मिषु सुप्तौ
कबलितसकलब्रह्माण्डां तां कवयः श्रेष्ठां ज्येष्ठामाहुः ॥ ३८.१३॥

निद्राविस्मृतिमोहालस्यप्रविभेदैस्सा भवमग्नेषु ।
एषैव स्याद्युञ्जानेषु ध्वस्तविकल्पः कोऽपि समाधिः ॥ ३८.१४॥

ऐन्द्री शक्तिर्व्यक्तबला चेद् भिन्ने स्यातां शीर्षकपाले ।
तस्मादेतां चतुरवचस्काः परिभाषन्ते छिन्नशिरस्काम् ॥ ३८.१५॥

भवति परा वाग्भैरव्याख्या पश्यन्ती सा कथिता तारा ।
रसनिधिमाप्ता जिह्वारङ्गं मातङ्गीति प्रथिता सेयम् ॥ ३८.१६॥

पिण्डे चाण्डे स्तम्भनशक्तिर्बगला मात्रस्तव महिमैकः ।
सर्वे व्यक्ताः किरणाः कमला बाह्यो महिमा भुवनाम्ब तव ॥ ३८.१७॥

बोधे बोधे बोद्धुश्शक्तिं सङ्कल्पानां पश्चाद्भान्तीम् ।
अविमुञ्चन्यो मनुते धीरो यत्किञ्चिद्वा ललिताऽवति तम् ॥ ३८.१८॥

दृष्टौ दृष्टौ द्रष्टुश्शक्तिं लोचनमण्डलमध्ये भान्तीम् ।
अविमुञ्चन्यः पश्यति धीरो यत्किञ्चिद्वा तमवत्यैन्द्री ॥ ३८.१९॥

प्राणसमीरं विदधानमिमं नित्यां यात्रामत्र शरीरे ।
चरणे चरणे परिशीलयति स्थिरदृष्टिर्यस्तमवति काली ॥ ३८.२०॥

स्थूलविकारान् परिमुञ्चन्त्या निर्मलनभसि स्थितया दृष्ट्या ।
मज्जन्त्या वा दहराकाशे लोकेश्वर्याः करुणां लभते ॥ ३८.२१॥

सर्वविकल्पान् परिभूयान्तर्विमलं मौनं महदवलम्ब्य ।
केवलमेकस्तिष्ठति योऽन्तस्तं सा ज्येष्ठा कुरुते मुक्तम् ॥ ३८.२२॥

मूले स्थित्या भैरव्याख्यां तारां देवीमुद्गीथेन ।
सेवेतार्यो विदितरहस्यो मातङ्गीं तां गुणगानेन ॥ ३८.२३॥

आसनबन्धादचलो भूत्वा रुद्धप्राणो बगलां भजते ।
अभितो व्याप्तं व्यक्तं तेजः कलयन् कमलाकरुणां लभते ॥ ३८.२४॥

एकविधादौ बहुभेदाऽथो शक्तिरनन्ता परमेशस्य ।
सभजनमार्गं गणपतिमुनिना पादाकुलकैरेवं विवृता ॥ ३८.२५॥ 950

%c10-q3/Sarada.Susarla/uma-c10-q3-itrans.txt medskip

एकोनचत्वारिंशः स्तबकः
प्रायो व्योमशरीरा (इन्द्रवज्रावृत्तम्)

व्याप्येदमिन्दोर्भुवनं य येव
प्रायेण तस्यामलचन्द्रिकाऽभूत् ।
मन्दस्तवार्तिं स धुनोतु हासो
निःशेषलोकेश्वरवल्लभायाः ॥ ३९.१॥

पूर्णे वियत्येकतटिज्ज्वलन्ती
लोकानशेषाननिशं पचन्ती ।
मेघे कदाचिन्महसा स्फुरन्ती
चण्डी प्रचण्डा हरतादघं नः ॥ ३९.२॥

गोलानि कान्यप्यधुनोद्भवन्ति
जीर्यन्ति कान्यप्यखिलेशकान्ते
यान्त्यम्बिके कान्यपि वृद्धिमत्र
पाके भवत्याः परितः प्रवृत्ते ॥ ३९.३॥

भासां विनेत्रा महता ग्रहैश्च
भूरिप्रमाणैर्युतमीशकान्ते ।
एकैकमण्डं तव लोमवच्चेत्
कस्ते महद्भाग्यमिह ब्रवीतु ॥ ३९.४॥

नाथस्य ते रूपमणोरणीयो
मातस्त्वदीयं महतो महीयः ।
जनाति यो देवि रहस्यमेतद्
व्याख्यातुमेष प्रभवत्यशेषम् ॥ ३९.५॥

यद् गर्जितं वारिदघर्षणेषु
शब्दस्तवायं सुगभीरघोषः ।
यल्लोकराज्ञि स्फुरितं तदेत-
दुज्जृम्भितं किञ्चन कान्तिवीचेः ॥ ३९.६॥

इन्द्रस्य वज्रं ज्वलितं कृशानोर्-
ज्योतिस्सहस्रच्छदबान्धवस्य ।
पीयूषभानोर्हसितं विसारि
जीवस्य चक्षुर्मम तात दैवम् ॥ ३९.७॥

यस्यैव तेजः प्रविभक्तमर्क-
विद्युच्छशाङ्कानललोचनेषु ।
गूढं तदाकाशगृहे समन्ता-
दन्तानभिज्ञं प्रणमामि दैवम् ॥ ३९.८॥

जाग्रत्सु बुद्धिर्निमिषत्सु निद्रा
शुष्केषु पक्तिस्तरुणेषु वृद्धिः ।
धीरेषु निष्ठा चपलेषु चेष्टा
देवी ममापत्तिमपाकरोतु ॥ ३९.९॥

विद्यावतो वादविधानशक्तिर्-
वीरस्य सङ्ग्रामविधानशक्तिः ।
नारीमणेर्मोहविधानशक्तिर्-
लेशत्रयं किञ्चिदापारशक्तेः ॥ ३९.१०॥

उत्साहयन्ती तपतां मनांसि
सञ्चोदयन्ती च महाक्रियासु ।
सङ्क्षोभयन्ती हृदयं खलानां
सम्मोहयन्ती च पराऽवतान्नः ॥ ३९.११॥

सञ्चालयन्ती सकलस्य देहं
व्यानस्य शक्त्या परितो लसन्त्या ।

जेतुः प्रतापेऽस्ति पलायनेऽस्ति
भीतस्य चेयं निखिलेशशक्तिः ॥ ३९.१२॥

एकं स्वरूपं बहुचित्रयोगात्
सन्दर्शयन्ती विविधं जनेभ्यः ।
सम्यग्दृशे स्वं विभुमर्पयन्ती
सर्वादिमायैव महेशजाया ॥ ३९.१३॥

यस्संश्रयेताखिलसङ्गतिस्त्वां
ध्यानेन मन्त्रेण गुणस्तवैर्वा ।
त्रैलोक्यसाम्राज्यधुरन्धरस्य
शुद्धान्तकान्ते स कृती मनुष्यः ॥ ३९.१४॥

मूलाग्निमुद्दीप्य शिरश्शशाङ्कं
सन्द्राव्य यस्तर्पयते कृती त्वाम् ।
तस्मिन्नगाधीश्वरकन्यके त्वं
प्रादुर्भवन्ती न किमादधासि ॥ ३९.१५॥

यस्त्वां सहस्रारसरोजमध्ये
सोमस्वरूपां भजतेऽम्ब योगी ।
तस्यान्तरः शान्तिमुपैति तापो
बाह्यस्य का नाम कथाऽल्पकस्य ॥ ३९.१६॥

दण्डेन योऽन्तर्दहरेऽवतीर्णः
प्राणेन वाचा महसा धिया वा ।
प्राप्नोति सोऽयं पुरमद्वितीयं
यत्र त्वमीशा सह चित्रलीला ॥ ३९.१७॥

तन्त्रोदितं विश्वविनेत्रि मन्त्रं
यस्ते नरः संयमवानुपास्ते ।
रुद्राणि सान्द्राम्बुदकेशपाशे
पाशैर्विमुक्तः स जयत्यशेषम् ॥ ३९.१८॥

पद्मासनो द्वादशवर्णशान्ती
दम्भोलिपाणिर्भुवनाधिनाथा ।
गीर्वाणमार्गो भृगुरब्जयोनिर्-
अन्ते तथाग्रे च हलां विराजी ॥ ३९.१९॥

जम्भस्य हन्ताऽनलशान्तिचन्द्रैः
संयुक्त ऊष्मा गलदेशजन्मा ।
दन्तस्थलीसम्भव ऊष्मवर्णो
वाणीपतिर्वज्रधरश्च लज्जा ॥ ३९.२०॥

विद्या त्वियं पञ्चदशाक्षराढ्या
साक्षान्महामौनगुरूपदिष्टा ।
गोप्यासु गोप्या सुकृतैरवाप्या
श्रेष्ठा विनुत्या परमेष्ठिनाऽपि ॥ ३९.२१॥

देहेष्वियं कुण्डलिनी न्यगादि
भूतेषु विद्युद् भुवनेषु चाभ्रम् ।
देवाङ्गनामस्तकलालिताङ्घ्रिर्-
देवी भवानी खलु देवतासु ॥ ३९.२२॥

चक्षुर्विधायाचलमन्तरेण
प्राणं प्रपश्यन् मनुवर्णरूपम् ।
संसेवते चेत्सकलस्य धात्रीं
सर्वेष्टलाभो विदुषः करस्थः ॥ ३९.२३॥

एकाक्षरीः पञ्चदशाक्षरीं वा
विद्याः प्रकृष्टाः सकलेशशक्तेः ।
यो भक्तियुक्तः प्रजपेदमुष्य
प्राणो वशे निस्तुलसिद्धियोनिः ॥ ३९.२४॥

एताः कवीनां पदकिङ्करस्य
पूताः प्रमोदं परमावहन्तु ।
गीतास्सभक्तिद्रवमिन्द्रवज्राः
श्वेताचलाधीश्वरवल्लभायाः ॥ ३९.२५॥   975

%c10-q4/Sai.Susarla/c10-q4।txt medskip

चत्वारिंशः स्तबकः
दैवगीतम् (पादाकुलकवृत्तम्)

शमयतु पापं दमयतु दुःखं हरतु विमोहं स्फुटयतु बोधम् ।

प्रथयतु शक्तिं मन्दं हसितं मनसिजशासनकुलसुदृशो नः ॥ ४०.१॥

आर्द्रा दयया पूर्णा शक्त्या दृष्टिवशंवदविष्टपराजा ।
अखिलपुरन्ध्रीपूज्या नारी मम निश्शेषां विपदं हरतु ॥ ४०.२॥

शुद्धब्रह्मणि मोदो दैवं तत्र सिसृक्षति कामो दैवम् ।
सृजति पदार्थान् दृष्टिर्दैवं तान् बिभ्राणे महिमा दैवम् ॥ ४०.३॥

विकृतौ विकृतौ प्रकृतिर्दैवं विषये विषये सत्ता दैवम् ।
दृष्टौ दृष्टौ प्रमितिर्दैवं ध्याने ध्याने निष्ठा दैवम् ॥ ४०.४॥

स्फूर्तौ स्फूर्तौ माया दैवं चलने चलने शक्तिर्दैवम् ।
तेजसि तेजसि लक्ष्मीर्दैवं शब्दे शब्दे वाणी दैवम् ॥ ४०.५॥

हृदये हृदये जीवद्दैवं शीर्षे शीर्षे ध्यायद्दैवम् ।
चक्षुषि चक्षुषि राजद्दैवं मूले मूले प्रतपद्दैवम् ॥ ४०.६॥

अभितो गगने प्रसरद्दैवं पृथिवीलोके रोहद्दैवम् ।
दिनकरबिम्बे दीप्यद्दैवं सितकरबिम्बे सिञ्चद्दैवम् ॥ ४०.७॥

श्रावं श्रावं वेद्यं दैवं नामं नामं राध्यं दैवम् ।
स्मारं स्मारं धार्यं दैवं वारं वारं स्तुत्यं दैवम् ॥ ४०.८॥

श्रुतिषु वटूनां ग्राह्यं दैवं गृहिणामग्नौ तर्प्यं दैवम् ।
तपतां शीर्षे पुष्टं दैवं यतिनां हृदये शिष्टं दैवम् ॥ ४०.९॥

नमता पुष्पैः पूज्यं दैवं कविना पद्याराध्यं दैवम् ।
मुनिना मनसा ध्येयं दैवं यतिना स्वात्मनि शोध्यं दैवम् ॥ ४०.१०॥

स्तुवतां वाचो विदधद्दैवं स्मरतां चेतः स्फुटयद्दैवम् ।
जपतां शक्तिं प्रथयद्दैवं नमतां दुरितं दमयद्दैवम् ॥ ४०.११॥

वाचो विनयद्वह्नौ दैवं प्राणान् विनयद्विद्युति दैवम् ।
कामान् विनयच्चन्द्रे दैवं बुद्धीर्विनयत्सूर्ये दैवम् ॥ ४०.१२॥

हृदये निवसद् गृह्णद्दैवं वस्तौ निवसद्विसृजद्दैवम् ।
कण्ठे निवसत्प्रवदद्दैवं कुक्षौ निवसत्प्रपचद्दैवम् ॥ ४०.१३॥

देहे निवसद्विलचद्दैवं पञ्चप्राणाकारं दैवम् ।
भागि समस्तस्यान्ने दैवं स्वाहाकारे तृप्यद्दैवम् ॥ ४०.१४॥

बिभ्रन्नारीवेषं दैवं शुभ्रदरस्मितविभ्राड् दैवम् ।
अभ्रमदापहचिकुरं दैवं विभ्रमवासस्थानं दैवम् ॥ ४०.१५॥

शीतज्योतिर्वदनं दैवं रुचिबिन्दूपमरदनं दैवम् ।
लावण्यामृतसदनं दैवं स्मररिपुलोचनमदनं दैवम् ॥ ४०.१६॥

लक्ष्मीवीचिमदलिकं दैवं प्रज्ञावीचिमदीक्षं दैवम् ।
तेजोवीचिमदधरं दैवं सम्मदवीचिमदास्यं दैवम् ॥ ४०.१७॥

करुणोल्लोलितनेत्रं दैवं श्रीकाराभश्रोत्रं दैवम् ।
कुसुमसुकोमलगात्रं दैवं कविवाग्वैभवपात्रं दैवम् ॥ ४०.१८॥

हिमवति शैले व्यक्तं दैवं सितगिरिशिखरे क्रीडद्दैवम् ।
तुम्बुरुनारदगीतं दैवं सुरमुनिसिद्धध्यातं दैवम् ॥ ४०.१९॥

क्वचिदपि रतिशतललितं दैवं क्वचिदपि सुतरां चण्डं दैवम् ।
भक्तमनोनुगवेषं दैवं योगिमनोनुगविभवं दैवम् ॥ ४०.२०॥

चरिते मधुरं स्तुवतां दैवं चरणे मधुरं नमतां दैवम् ।
अधरे मधुरं शम्भोर्दैवं मम तु स्तन्ये मधुरं दैवम् ॥ ४०.२१॥

भुजभृतविष्टपभारं दैवं पदधृतसम्पत्सारं दैवम् ।
लालितनिर्जरवीरं दैवं रक्षितसात्त्विकधीरं दैवम् ॥ ४०.२२॥

चिच्छक्त्यात्मकमधितनु दैवं तटिदाकृत्यधिभूतं दैवम् ।
श्रुतिषु शिवेति प्रथितं दैवं जयति जगत्त्रयविनुतं दैवम् ॥ ४०.२३॥

रमणमहर्षेरन्तेवासी मध्यमपुत्रो नरसिंहस्य ।
वासिष्ठोऽयं मरुतां मातुर्गणपतिरङ्घ्रिं शरणमुपैति ॥ ४०.२४॥

त्रिभुवनभर्तुः परमा शक्तिस्सकलसवित्री गौरी जयति ।
तन्नुतिरेषा गणपतिरचिता पादाकुलकप्रान्ता जयति ॥ ४०.२५॥ 1000

॥ समाप्तं च दशमं शतकम् ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः ॥

गणपतेः कृतिः उमासहस्रं समाप्तम् ॥